अन्यासाञ्च तन्त्रीणां सूक्ष्मतराणां मूलभूते—द्वे स्थूलतन्त्र्यौ पृष्ठवंशमुभयतः स्थिते धनुर्वक्रे। तदेतदखिलं प्रत्यक्षदृश्यं, परीक्षाशतसिद्धञ्च तासां संज्ञाचेष्टावहत्वम्। एतेन च बीजभूतेन परिचयेन सम्यक् संवदते तन्त्रशास्त्रोक्तो नाड़ीचक्रवर्णनविस्तरः। नाड़ीचक्रवर्णनञ्च योगियाज्ञवल्क्ये, रुद्रयामले, निरुत्तरतन्त्रे, शारदातिलके, षट्चक्रनिरूपणादौ च मृग्यम्। प्रसङ्गविस्तरभिया त्विह दिङ्मात्रमुदाहरामः।

तन्त्रोक्त विस्तरस्य सारोद्धारः

एष हि तन्त्रोक्तविस्तरस्य सारः। "नाड्योऽनन्ताः[1] समुत्पन्नाः सुषुम्नापञ्चपर्वसु"—इत्यनन्तानां नाड़ीनां मूलभूता मुख्यास्तिस्र एव नाड्यः—ईड़ापिङ्गले पृष्ठवंशबहिःस्थे धनुराकारे, सुषुम्ना च पृष्ठवंशमध्यस्था "चव्यवल्लीव"[2] बहुसूत्रसंघातमयीति। सा च "ग्रीवान्तं प्राप्य गलिता तिर्य्यग्भूता"[3] शिरसि सहस्रदलपद्मेन संलग्ना। सहस्रदलञ्चेदं मस्तिष्कमेव नान्यत्। तन्त्रोक्तं चक्रषट्कञ्च न काल्पनिकं, न वाऽप्रत्यक्षम्। तथाहि पूर्वोक्तप्रधाननाड़ीत्रितयसंयुक्तैः सूक्ष्मनाड़ीप्रतानैरारचिताश्चक्राकारनाड़ीसङ्घाताः खलु षड़ेव मुख्याः प्रत्यक्षदृश्याः। तानिहाग्रे यथास्थानं च सम्यग् वर्णयिष्यामः। कर्णिकान्तरीयाः सूक्ष्मतमवर्णादिविशेषास्तु ध्यानगम्या योगिनामेव नास्मादृशाम्। तथाप्येतत् सुस्पष्टञ्च प्रचुरञ्च वीजमुपलभ्यास्माभिस्तन्त्रशास्त्रोक्तार्थानुसारेण परिभाषिता नाड़ीति संज्ञा। किञ्च, परिभाषितार्थे नाड़ीपदप्रयोगश्चरकेऽपि दृश्यते यथा—"मन्ये संश्रित्य वातोऽन्तर्यदा नाड़ीः प्रपद्यते। मन्यास्तम्भं तदा कुर्य्यादन्तरयामसंज्ञितम्।" इति ( च० चिकि० २८ अ० )

नाड़ीशब्दतश्च लाटिनभाषायां "न्युरन्" इति, पारस्यभाषायां 'नर्ह्' इति, आंग्लभाषायां 'नर्भ्' इति च संज्ञाः समुद्भूता इत्यस्माकं सुदृढः प्रत्ययः।

नाड्यर्थे स्नायुपदप्रयोगः प्रामादिकः परिहर्त्तव्यश्च

नाड्यर्थे स्नायुपदप्रयोगस्तु विपर्य्यस्तेऽपि शास्त्रे क्वचिदपि न दृष्टः, प्रचलितस्तु हन्त सोऽद्य कस्यचिदज्ञानादादौ वङ्गभाषायां, तदनुकारिणि च कासुचिदन्यास्वपि भाषासु। स चैतर्हि विज्ञैः सर्व्वथैव वर्जनीयः। स्नायुपदार्थस्त्वस्माभिः परिभाषाध्याये सम्यक् प्रतिपादितः।

---

१ इयं शारदातिलकीयं वचनम्। २ एष निर्देशः "मेरोर्बाह्यप्रदेशे शशिमिहिरसिरे सव्यदक्षे निषण्णे मध्ये नाड़ी सुषुम्ने"ति वचनव्याख्याने षट्चक्रनिरूपणटीकायां दृश्यते। वचनं हि—"सुषुम्ना चव्यवल्लीव मेरुमध्ये परिस्थिता" इत्यादि। अतिमनोहरञ्चेदं स्वरूपानुगतं सादृश्यं, चव्यवल्ली हि सूत्रगुच्छसंघातमयी भवति। पृष्ठवंशमध्यस्थश्च नाड़ीकाण्डस्तादृगेव लक्ष्यते सूक्ष्मशारीरपरीक्षया। ३ एषोऽपि पाठस्तन्त्रान्तरात्तत्रैवोद्धृतः।

अथैवमतिसंक्षेपेण सिराधमन्यादिवस्तूनां यथार्हं परिचयमारचय्य सम्प्रति प्रतिसंस्कर्त्तॄणां निबन्धॄणाञ्च निरङ्कुशप्रयोगानुदाहरामः ।

तत्र सिरापदस्य सुश्रुते सिराव्यधाधिकारेऽन्यत्र च बहुशो यथायथप्रयोगे दृश्यमानेऽपि, परिभाषित धमन्यर्थे प्रयोगो यथा—

वैद्यकेः शारीरसंज्ञाविप्लवस्य उदाहरणानि—तत्र सिरेति संज्ञाया अपप्रयोगाः

"असृग्वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः" इति ( सु० शा० ७अ० )

वाग्भटे धमन्यर्थे सिरापदप्रयोगो यथा—

"दशमूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः । रसात्मकं वहन्त्योजः"—इत्यादि ।

रसायन्यर्थे सिरापदप्रयोगो यथा—

"शीता गौर्य्यः स्थिराः कफात्" इति ( सु० शा० ७अ० )

परिभाषितनाड्यर्थे सिरापदप्रयोगो यथा तत्रैव—

"कर्णयोर्दश, तासां शब्दवाहिनीनामेकैकां परिहरेत्" इति—

"व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः ।
प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम् ॥" इति च ।

अत्र हि शेषोक्ते पद्ये मणिपूराख्यचक्रात् समन्ततः प्रसृताः नाड्यो लक्ष्यन्ते बिसतन्तुसदृशाः, न पुना रक्तवाहिन्यः प्रणाल्य—इति स्फुटमेव सूक्ष्मदृशाम् ।

अथ कण्डरार्थे सिरापदप्रयोगो यथा सुश्रुते—

"अंसदेशस्थितो वायुः शोषयित्वांऽसबन्धनम् ।
सिराश्चाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम् ॥" इति
( सु० निदान० १अ० )

सर्वथा सिरापदार्थव्याकुलीभावः सुश्रुते यथा—

"धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम् ।
स्वाः सिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि ॥" इति
( सु० शा० ७अ० )

न हि सिरासु सञ्चरद्रक्तं स्पर्शज्ञानं साधयति, तद्धि स्पर्शसंज्ञावाहिभिर्नाड़ीप्रतानैः सम्पद्यते !!

संग्रहकृतस्तु स्रोतःसाधारणेऽर्थेऽपि क्वचित् सिरापदं प्रयुञ्जते यथा—

"वीर्य्यवाहिसिराधरौ वृषणौ पौरुषावहौ" इत्यादौ । ( शार्ङ्ग० पूर्व० ५अ०)

अथ क्रमादीदृशमपि हास्यास्पदं शारीरमाविर्बभूव यथा तत्रैव—

"सन्धिबन्धनकारिण्यो दोषधातुवहाः सिराः" इति

सन्धिबन्धनकारिण्यो हि स्नायवः, न सिराः । दृश्यतां सुश्रुते सन्ध्यध्यायः ।

एवं धमनीपदस्य सुश्रुते शोणितवर्णनीयाध्याये, चरके चार्थेदशमहामूलीये ऽन्यत्र च परिभाषितधमन्यर्थे सुष्ठु प्रयोगेऽपि परिभाषितसिरार्थे धमनीपद-प्रयोगो यथा—

अथ धमनीपदस्य अपप्रयोगा:

"अधृतिरदृढसौहृदः कृतघ्नः ।
कृशपरुषो धमनीततः प्रलापी ॥"—इत्यादि
(सु० शारीर० ४ अ०)

अत्र धमनीततत्वं हि नीलाभसिराबहुलत्वमिति स्फुटमेव ।

परिभाषित नाड्यर्थे धमनीपदप्रयोगाश्च दृश्यन्ते बहुशः । यथा—

"ऊर्द्ध्वगाः शब्द-स्पर्श-रूप-रस-गन्ध-प्रश्वासोच्छ्वास-जृम्भित-क्षुद्धसित-कथित-रुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति ।"—इति ( सु० शा० ९अ० )।

अथ नानाविधस्रोतोऽर्थेषु धमनीपदप्रयोगाः यथा—

"मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे, शुक्रप्रादुर्भावाय द्वे, द्वे च विसर्गाय,—ते एव रक्तमभिवहतो नारीणामार्त्तवसंज्ञम्" इति ( सु० शा० ९ अ०)।

अथ पूर्वदर्शितोदाहरणे चरके नाड़ीपदस्य यथार्हप्रयोगेऽपि नानार्थेषु तत्-प्रयोगा न विरलाः । यत्सत्यं, नाड़ीपदस्य नानाविधप्रणाल्यर्थे प्रयोग एव वैद्यके प्रचुरतरो दृश्यते, अस्मत्परिभाषितार्थे तत्-प्रयोगस्तु तन्त्रशास्त्रेष्वेव भूम्ना । नानार्थेषु नाड़ीपदप्रयोगोदा-हरणानि तु यथा—परिभाषितधमन्यर्थे नाड़ीपदं नाड़ीविज्ञानग्रन्थेषु । विस्मय-पदञ्चेदं यत् चरक-सुश्रुत-वाग्भटेषु नाड़ीपरीक्षाया गन्धोऽपि नोपलभ्यते । न च नाड़ीविज्ञानेऽपि धमन्यर्थे नाड़ीपदमेव प्रयुक्तं, "धमनी जीवसाक्षिणी"—इत्यादौ तत्रैव धमनीपदस्यान्वर्थस्यापि श्रवणात् ।

नाड़ीपदस्य नानार्थेषु प्रयोगाः

किञ्च सुश्रुतेऽपि—"मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा, साऽस्य मातुराहाररसवीर्य्यमभिवहति" ( सु० शा० ३ अ० )—इत्यत्र परि-भाषितधमन्यर्थ एव प्रयुक्तमाद्यं नाड़ीति पदं द्रष्टव्यं, सिराधमनीसमष्ट्यर्थे तु द्वितीयम् । परं तत्रैवानुपदं धमनीपदस्यान्वर्थप्रयोगोऽपि सुलभः, यथा—"असञ्जाताङ्गप्रत्यङ्गविभागमानिषेकात् प्रभृति सर्वशरीरावयवानुसारिणीनां रसवहानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति" इति ( सु० शा० ३ अ० )।

नाड़ीपदस्य प्रणालिकार्थे प्रयोगास्तु वैद्यके काव्यादिषु च शतशो दृश्यन्ते। तत्र दिक्—

"द्वारमलभमानः पूयः स्वमाश्रयमवदीर्य्योत्सङ्गं महान्तमवकाशं कृत्वा नाड़ीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति" (सु० सू० १७ अ०)। 'नाड़ीव्रण' इति प्रयोगश्चैदृश एव, "नाड़िन्धम"—इति पदञ्च तथा स्वर्णकारार्थे लोके।

"सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः, पक्वासु च तोयनाड़ीभिरिव तोयागमनं पूयास्रावश्च"—इत्यत्र च तादृश एव प्रयोगः। (सु० सू० २२ अ०)

एवं नाड़ीपदस्य दुग्धवहस्रोतोऽर्थे प्रयोगोऽपि दृश्यते, यथा सुश्रुते स्तनपाकचिकित्सायाम्—

"पक्वे च दुग्धहरिणीः परिहृत्य नाड़ीः
कृष्णञ्च चूचुकयुगं विदधीत शस्त्रम्"—इत्यत्र।
(सु० चि० १७ अ०)

अमरकोषीय भ्रमः तन्निरसनञ्च

ननु अमरेण "नाड़ी तु धमनिः सिरा" इति—नाड्यादिपदत्रयस्य पर्य्यायत्वेनाभिधानाद् यथेच्छप्रयोगे को दोष इति चेत्। मैवम्। ईदृशपारिभाषिकपदानां पृथगर्थतया शारीरेऽवश्यग्रहणीयत्वात्। तथाहि सुश्रुते सिरावर्णनाध्यायः सर्वथा पृथगेव धमनीव्याकरणाध्यायात्। श्रूयते च तत्र—"अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः,कस्माद्—व्यञ्जनान्यत्वान्मूलसन्नियमात् कर्म्मवैशेष्यादागमाच्च।" इति (सु० शा० ९ अ०)। युगपत्प्रयोगश्च सिरादिपदानां दृश्यते यथा—"तासां प्रथमा मांसधरा नाम, यस्यां मांसे सिरा-स्नायु धमनी-स्रोतसां प्रताना भवन्ति" (सु० शा० ४ अ०)—इत्यादौ। न हि पर्य्यायशब्दानां क्वचिद् युगपत्प्रयोगो भवतीदृशः। तस्मादमरसिंहोक्तं पर्य्यायवचनं शारीराऽज्ञानमूलमित्यवसेयमेव। एवं वैद्यकेऽपि संज्ञात्रयस्य यथेच्छप्रयोगः प्रतिसंस्कर्त्तॄणां प्रमादजन्य इति चाऽकामेनापि स्वीकरणीयम्। परमर्षिकृतानां यथार्हप्रयोगाणां विभागानाञ्चाद्यापि बहुधा जागरूकत्वात्।

स्वोक्तिविरोधश्च संज्ञार्थव्याकुलीभावनिमित्तः सुश्रुते यथा—सूत्रस्थाने "हृदयाच्चतुर्विंशतिं धमनीरनुप्रविश्य" इत्याद्यभिधाय पुनः शारीरे "चतुर्विंशतिर्धमन्यो नाभिप्रभवा अभिहिता"—इति सूचनम्। वस्तुतस्तु अनयोः प्रयोगयोराद्ये परिभाषितधमन्यर्थे, द्वितीये तु नाड्यर्थे धमनीपदस्य प्रयोग इति शारीरानुगतः समाधिः।

न च वाच्यं—वैद्यके द्विविधास्वपि रक्तवहप्रणालीसु सिरापदं प्रयुक्तं, त्वदुक्तनाड्यर्थे तु धमनीपदमिति। सिरापदस्य दर्शितोदाहरणेषु रसायन्यादिनानार्थेषु प्रयोगदर्शनात्, क्वचित् स्पर्शज्ञानसाधनताभिधानात्, वाग्वह-शब्दवहत्वादिसूचनाच्च। धमनीपदस्य च रसवह-रक्तवहादि-प्रणाल्यर्थेष्वपि दर्शितदिशा प्रयोगशतदर्शनात्। तस्मात् सर्वथा व्याकुलीभूतमिदं संज्ञावितयं प्रतिसंस्कर्त्तृदोषात्, तद्दर्शनाच्च कोषादौ पर्य्यायाभिधानमित्यलमतिविस्तरेण।

न चात्र शक्यं किमपि समाधानम्

अथान्यः शारीरविपर्य्ययक्रमः शास्त्रनिर्दिष्टानामाशयादीनां वर्णनाविलोपात् परिचयविरहाच्च द्रष्टव्यः। श्रूयन्ते हि शास्त्रे नानाविधा आशयादीनां संज्ञाः, न च लभ्यन्ते तत्परिचायकानि वर्णनानि। तत्र दिङ्मात्रं यथा—

अथान्यः शारीरविपर्य्ययक्रमः—आशयादिवर्णनाविलोपात् तत्परिचयविरहाच्च

"स्थानान्यामाग्निपक्वाणां मूत्रस्य रुधिरस्य च।
हृदुण्डुकः फुस्फुसश्च कोष्ठ इत्यभिधीयते॥" इति

( सु० चिकि० २अ० )—

इत्यत्राभिहितानामाशयादीनां वर्णनविस्तरः शारीरे यथास्थानं न दृश्यते, दृश्यते तु किञ्चित् कुत्रचित् प्रसङ्गतः। यथा आमाशयवर्णनं हृद्वर्णनञ्च सुश्रुते पञ्चमाध्याये नोपलभ्यते, मर्माध्याये तु—"स्तनयोर्मध्यमधिष्ठायाऽमाशयद्वारं सत्वरजस्तमसामधिष्ठानं हृदयं नाम तत्र सद्य एव मरणम्।" ( सु० शा० ६ अ० ) इति निर्देशः। पुनरन्यत्र गर्भव्याकरणे च दृश्यते "पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम्" इति ( सु० शा० ४अ० )।

मूत्राशयपरिचयः सौश्रुतशारीरस्थाने नास्त्येव, अस्ति तु प्रासङ्गिको निदानस्थाने यथा—

"नाभि-पृष्ठ-कटी-मुष्क-गुद-वंक्षण-शेफसाम्।
एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुखः।
अलाब्वा इव रूपेण सिरास्नायुपरिग्रहः॥"—इति

( सु० निदान० ३अ० )

'फुस्फुस' परिचयश्च सुश्रुते नैव लभ्यते, न वा क्वचित्तस्य श्वासयन्त्रमित्यभिधानम्। शार्ङ्गधरे तु दृश्यते—"उदानवायोराधारः फुस्फुसः प्रोच्यते बुधै"रिति। न च "शोणितफेनप्रभवः फुस्फुस" इत्यनेन फुस्फुसस्य स्वरूपज्ञानं सम्भवति। तत्स्वरूपावबोधस्त्वद्यापि कथञ्चित् गतानुगतिकश्रुतेरेव।

एवञ्च 'क्लोम'पदार्थव्याकुलीभावोऽपि स्फुट एव। तथाहि केचिदामाशयपश्चाद्-वर्त्तिनि अग्न्याशयाख्ये यन्त्रे[१] क्लोमपदं प्रयुज्यते साम्प्रतिकाः, तत् प्रामादिकम्। यतः "शुष्कक्लोमगलाननः"—इत्यादिप्रयोगदर्शनात् (सु० उ० तन्त्रे ४१अ०), क्लोम्नः पिपासास्थानत्वेन निर्द्देशाच्च गलसमीपवर्त्ती कोऽप्यवयवः क्लोमेति शक्यमुन्नेतुम्। "क्लोम स्याद् गलनाड़िका"—इति देवयाज्ञिकभाष्यदर्शनात् सुश्रुतेन मण्डलाख्य-स्यास्थिसन्धेः क्लोम्नि (सु० शा० ५अ०) दृष्टान्तप्रदर्शनाच्च तरुणास्थिचक्रपरिवेष्टितः श्वासपथ[२] एव कण्ठपुरःस्थः क्लोमेति निश्चयोऽस्माकम्। श्वासपथश्चायं फुस्फुसद्वये विभक्त इति उरोमध्यतोप्यऽस्य स्थानम्। यत्तु "हृदयस्याधो वामतः प्लीहा फुस्फुसश्च दक्षिणतो यकृत् क्लोम चे"ति सौश्रुतः पाठः, तत्र लिपिकरप्रमाद एव दरीदृश्यते। "हृदयस्याधो वामतः प्लीहा दक्षिणतो यकृदुभयतः क्लोम फुस्फुसौ चे"ति तु साधीयान् पाठः। अन्यथा न केनापि कथमपि शक्यं समाधातुम्।

'उण्डुक'—परिचयश्च क्वापि स्पष्टं न वर्णितः, न च "शोणितकिट्टप्रभव उण्डुक"—इत्युक्तेस्तत्स्वरूपावबोधः। समुन्नेयन्तु तत्स्वरूपं कथञ्चित् मल-धराख्यकलाख्यानप्रसङ्गे "उण्डुकस्थं विभजते मलं मलधरा कला"—इत्यभि-धानात्। उण्डुको हि नाम बृहदन्त्रस्याद्यो भागश्चरके 'पुरीषोण्डुक' इति प्रतिपादितः।

आशयपदार्थाऽज्ञानादर्थव्याकुलीभावश्च प्रतिसंस्कर्त्तृकृतः प्रसङ्गाद् यथा—"तस्य पुनः संख्यानं—त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुस्फुस उण्डुको हृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि"—इत्याद्युपक्रम्य तत्रैव—"आशयास्तु—वाताशयः पित्ताशयः श्लेष्मा-शयो रक्ताशय आमाशयः पक्वाशयो मूत्राशयः स्त्रीणां गर्भाशयो ऽष्टम इति"—पुनरुक्तौ। इह हि हृदय-फुस्फुसान्त्रादिभ्यः पृथङ् न सन्ति रक्ता-शय-श्लेष्माशय-पक्वाशयाद्या आशयाः क्वचिदपि लभ्यमानवैद्यके प्रत्यक्षदर्शने[३] वेति नूनमर्थाऽज्ञानमूलोऽयं पृथङ्निर्द्देशः। अथ यकृत्प्लीहानौ रक्ताशयं मन्यसे, तत्र रसस्य रक्तीभावोपदेशात्,—तथापि यकृत्प्लीहव्यतिरिक्तोऽसौ रक्ताशयः कथ-मभिहितः? वस्तुतस्तु—"त्वचः सप्त, कलाः सप्त, आशयाः सप्त"—इत्यादौ 'समास'वचने यकृत्प्लीहादेरन्तर्भाव एवाशयेषु प्राचामभिप्रेतस्तथाचोक्तप्रसङ्गे पाठसंस्कारः[४] करणीय एव, अन्यथा स्वोक्तिविरोधस्य दुर्वारत्वात्।

आशयार्थाऽज्ञानात सुश्रुते अर्थ-व्याकुली भावः

१ Pancreas. २ Trachea. ३ हृदयमेव रक्ताशयः, फुस्फुसः श्लेष्माशयः, अन्त्राणि पक्वाशय-श्चेत्यादिः सुप्रसिद्धिलात्तद्व्यतिरिक्तानां तत्तदाशयानामदर्शनाच्चेत्यभिसन्धिः। ४ पाठसंस्कारश्च यथा स्यात्तथा परिशिष्टे विशदं प्रदर्शयिष्यामः।

सन्ति च खल्विहाद्यापि लभ्यमाने शास्त्रावशेषे नानाविधाः शारीरसंज्ञास्तासामर्थावबोधो दुष्करप्रायः। तदुदाहरणानि यथा—सुश्रुते अश्मरीनिदाने—

"वस्तिर्वस्तिशिरश्चैव पौरुषं वृषणौ गुदम्।
एकसम्बन्धिनो ह्येते गुदास्थिविवरस्थिताः॥"

( सु० नि० ३अ० )

—इत्यत्र पौरुषं वस्तिशिरश्चेति पदद्वयं दुर्बोधम्। तत्र हि वस्तिशिरस्तावद् वस्तेः शीर्षभागो वा मूलभागो वेति सन्देहः। पौरुषमिति वस्तिमूलस्थो ग्रन्थिविशेषः[1] प्रत्यक्षदृष्टः स्यादिति प्रतीतिः शारीरविदाम्। न चात्र डल्हनोक्तः "पौरुषं मेढ्रम्"—इत्यर्थः सङ्गच्छते, पौरुषस्येह 'गुदास्थिविवरस्थित'त्वाभिधानात्[2]।

तथापीह प्राचीनशारीरसंज्ञा अद्यापि बहुशो वर्त्तन्ते—दुर्बोधप्रायाः

किञ्चैवमश्मरीचिकित्सिते—

"सेवनी शुक्रहरणी स्रोतसी फलयोर्गुदम्।
मूत्रसेकं मूत्रवहं मूत्रवस्तिस्तथाऽष्टमः॥"

( सु० चिकि० ७ अ० )—इत्यत्र—

निर्दिष्टानां पदानामर्थग्रहोऽपि अज्ञातशारीराणां सुदुष्कर एव। उक्तप्रसङ्गस्य निभृतनिपुणविचारविशेषतस्तु प्रतीमः—मूत्रप्रसेकः शिश्नस्थो मूत्रक्षरणमार्गः। मूत्रवहं स्रोतोद्वयं वृक्काभ्यां विनिर्गतं, वस्तिमुभयतः प्रविष्टम्। फलस्रोतसी फलकोषाभ्यामूर्द्ध्वं गते शुक्रवहे स्रोतसीत्यादि दिक्।

अथापरो विपर्य्ययक्रमः काल्पनिकशारीरसम्भवाद् दृश्यते। इह हि प्रतिसंस्कर्तॄणां संग्रहकृताञ्च कल्पनाकल्पतरोरुदियाय नानाविधः शारीरविवरणविस्तर—इत्यवोचाम। सोऽसावनार्षश्च प्रत्यक्षविरुद्धश्चेति सर्वथा वर्जनीय एव। यथा चैतत् तथा साम्प्रतमुदाहरणैः प्रतिपादयामः।

अथ तृतीयो विपर्य्ययक्रमः काल्पनिकशारीरसम्भवात्

तत्रैकमुदाहरणं वस्तौ मूत्रागमनविषयम्। मूत्रं हि नाम वृक्कयोः सहस्रशोऽवस्थितास्वतिसूक्ष्मासु प्रणालीषु नियतं परिस्रवति, ततश्च वृक्कद्वयविनिर्गताभ्यां

---

१ Prostate gland—इत्याख्यया प्रसिद्धः। २ यद्यपि वृषणावपि न गुदास्थिविवरस्थौ तथापि गर्भावस्थानकाले बालस्य श्रोणिविवरान्तरेव तयोरवस्थानात् तथाभिधानं सङ्गच्छते। मेढ्रन्तु तदापि श्रोणिविवराद्बहिरेव।

"मूत्रवह" संज्ञाभ्यां स्रोतोभ्यां प्रचरति मूत्राशये वस्त्यपरपर्य्याये—इत्येतद-सन्दिग्धं सत्यं प्रत्यक्षसिद्धं परीक्षासिद्धञ्च। परं सुश्रुतेऽश्मरीनिदाने श्रूयते—

"पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः।
तर्पयन्ति सदा मूत्रं सरितः सागरं यथा॥
सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः।
नाड़ीभिरुपनीतस्य मूत्रस्यामाशयान्तरात्॥
जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्य्यते।
आमुखात् सलिले न्यस्तः पार्श्वेभ्यः पूर्य्यते नवः।
घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्य्यते॥" इति—
(सु० निदान० ३अ०)।

मा चैवं मंस्थाः—परमर्षीणामिवैष मतिभ्रमो, नात्र प्रतिसंस्कर्त्तुरपराध—इति। यतः अतिपुराणे सर्वायुर्वेदमहाकरेऽथर्ववेदे सुश्रुते चान्यत्र दृश्यते मूत्रनिर्म्माणविषयकस्यापि यथार्थशारीरज्ञानस्य पुष्कलं प्रमाणम्। तद्यथा—

अथर्ववेदे मूत्ररोधप्रसङ्गे शरशलाकया मूत्रसंस्रावणप्रसङ्गे मन्त्रः—

"यद् आन्त्रेषु गवीन्योर्यद्वस्तावधि संश्रितम्।
एवा ते मूत्रं मुच्यतां वहिर्वालिति सर्वकम्॥" इति[1]—

अत्र गवीन्योरित्यनेन निःसंशयं वृक्काभ्यां विनिर्गते मूत्रवहे स्रोतसो लक्ष्येते। व्याख्यातञ्च सायणाचार्य्येणापि—"मूत्रस्य मूत्राशयप्राप्तिसाधने पार्श्वद्वयस्थे नाड्यौ गवीन्यौ इत्युच्येते" इति।

सुश्रुतेऽपि धमनीव्याकरणे—

"मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे" इति स्पष्टं गवीन्योरेव[2] निर्देशः।

---

१ एष मन्त्रः अथर्ववेदस्य प्रथमकाण्डे प्रथमानुवाके ३य सूक्ते लभ्यते। अस्य चेदं सायनभाष्यम्—"आन्त्रेषु उदरान्तर्गतेषु पुरीततसु। अधि सप्तम्यर्थानुवादे। यत् मूत्रं संश्रितं समवस्थितं रोगवशाद्बहिर्निर्गच्छन्निरुद्धमभूत्। तथा गवीन्योः,—आन्त्रेभ्यो विनिर्गतस्य मूत्रस्य मूत्राशयप्राप्तिसाधने पार्श्वद्वयस्थे नाड्यौ गवीन्यौ—इत्युच्येते। तयोरपि यत् मूत्रं संश्रितम्। तथा वस्तौ—धनुराकारो मूत्राशयो वस्तिरुच्यते, तत्रापि यत् मूत्रं संश्रितमस्ति। ते तव उक्तस्थानेषु निरुद्धं तत् मूत्रं, एवा एवम् यथापूर्वं मुच्यतां निर्गच्छतु। निर्गमनप्रकारमेवाह, सर्वकं सर्वं तन्मूत्रम्। वाल्—अनुकरणशब्दोऽयम्। इति—एवमात्मकं शब्दं कुर्वत्। बहिः शरीराद् बाह्यप्रदेशे। मुच्यतामिति सम्बन्धः। २ गवीन्यौ = Ureters.

किञ्चाश्मरी चिकित्सितेऽपि श्रूयते सुश्रुत एव—

"मूत्रवह-शुक्रवह-मुष्कस्रोतो-मूत्रप्रसेक-सेवनी-योनि-गुद-वस्तीन् परिहरेत्। तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णवस्तेः। शुक्रवहच्छेदान्मरणं क्लैव्यं वा। मुष्कस्रोत-उपघाताद् ध्वजभङ्गः। मूत्रप्रसेकक्षणनान्मूत्रक्षरणम्।" इत्यादि

( सु० चिकि० ७अ० )

अत्रापि मूत्रवहे गवीन्याविव। मूत्रप्रसेकः शिश्नस्थो मूत्रमार्ग इत्युक्तपूर्वम्।

अतएव वयं मन्यामहे,—पूर्वोद्धृतसन्दर्भे "सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः" इत्युक्त्या परमर्षिणा वृक्काभ्यन्तरस्थाः सूक्ष्मतमा प्रणाल्योऽभिलक्षिताः, ताभिर्हि शनैर्मूत्रं सञ्चिन्वतीभिर्वृक्कहृदये प्रथमं, ततश्च वृक्काभ्यां विनिर्गतयोर्गवीन्यो-र्मूत्रमर्प्यते, गवीनीभ्यान्तु मूत्रस्य मूत्राशयप्राप्तिः। प्रतिसंस्कर्त्ता पुनरिह शारीरा-ऽज्ञानात् स्वकपोलकल्पनया मूत्राशय एव मूत्रवहा नाड्यः सहस्रशो योजिताः— इति सर्वथा हास्यास्पदमेवेदं विदितशारीराणाम्।

अथवा लिपिकरप्रमाद एवात्र स्वीक्रियताम्। तथाहि प्रथमश्लोके "तर्पयन्ति सदा मूत्रं" इत्यत्र "तर्पयन्ति सदा वृक्कौ"—इति पाठ एव साधीयान् प्रतिभाति, "सरितः सागरं यथा तथा मूत्रं तर्पयन्ती"त्युक्तौ- सागरमूत्रयो-रुपमानोपमेयभावासङ्गतेः। शेषतश्च "घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्य्यते" इत्यस्य स्थाने "घटो यथा तथा वृक्कौ ततो वस्तिश्च पूर्य्यते" इति पठनीयम्, "विद्धि" इति पदस्य वृथागर्भितत्वादुक्तहेतोश्च।

अपरश्च शारीराऽज्ञानजन्यः सार्व्वजनीनप्रायो भ्रमो यथा—

-"यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा।

शरीरेषु तथा शुक्रं नृणां विद्याद् भिषग्वरः"।—( सु०शा० ४ अ० )

इति प्राचीनसौश्रुतपद्यदर्शनात् शुक्रस्य स्थानमेव नास्तीति मन्यन्ते केचिद् भिषजः। वस्तुतस्तु शुक्रं नियमेन फलकोषयोर्निर्मीयते, सञ्चीयते च शुक्राधारयो-र्वस्तिपार्श्वगतयोः शुक्रवहाभ्यां स्रोतोभ्याम्। अतएव चरके—

"शुक्रवहानां स्रोतसां वृषणौ मूलम्" इत्यादि ( च० विमान० ५ अ० )। सुश्रुतेऽपि—"शुक्रवहच्छेदान्मरणं क्लैव्यं वे"ति स्पष्टमुच्यते। न च शुक्रा-

---

१ अत्र वस्तिपदेन वस्तिदेश उच्यते, अन्यथा अर्थासङ्गतेः।

धारयोर्ज्ञानाभावः परमर्षीणां सम्भवति, यतश्चरके वाजीकरणपादे नक्तशुक्रं व्यवस्थितम्, न च तत् शुक्राधारच्छेदमन्तरा लभ्यते।

"यथा पयसि सर्पि"रित्याद्यभिधानन्तु सर्वशरीरचरं सूक्ष्मतरं शुक्रसारं लक्षयति। अस्ति हि स्थूलं शुक्रं व्यवायादौ प्रच्यवत्—"स्फाटिकाभं द्रवं स्निग्धं",—यदधिकृत्य प्रवृत्तो वादः। अस्ति चापरं सूक्ष्मतरं सारभूतं शुक्रं, यस्मात् पुंस्त्वव्यञ्जकश्मश्रु-पौरुषाकृतिविशेषाः सम्भवन्ति, यदभावाच्च कृतकनपुंसकानां बलीवर्द्दादीनां च नाविर्भवन्ति श्मश्रु-ककुदादीनि पुंस्त्वलिङ्गानि। तदेवं शुक्रद्वैविध्ये सिद्धे सूक्ष्मतरं शुक्रमभिप्रेत्य "यथा पयसि सर्पि"रित्यादि प्राचां वचनं व्याख्येयम्।

अथ चतुर्थः शारीरविपर्य्यासक्रमो लिपिकरप्रमादजन्य इति निर्विशङ्कं ब्रूमः। तदुदाहरणानि यथा—

चतुर्थः शारीरविपर्य्ययक्रमो लिपिकरप्रमादनिमित्तः।

"पित्त-पक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति"(सु० शा० ५ अ०) —इत्यत्र "वस्ति-पक्वाशयमध्ये" इति पाठो भवितुमर्हति, शरीरे तथैव दर्शनादन्यथा प्रत्यक्षविरोधाच्च।

किञ्च—"द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः।
मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते"। (सु० शा० ४ अ०)

—इत्यत्र "द्व्यङ्गुले दक्षिणे वामे"—इत्येव साधीयान् पाठः, अन्यथा प्रत्यक्षविरोधात्, स्वोक्तिविरोधाच्च। श्रूयते हि "शुक्रवहे द्वे शुक्रप्रादुर्भावाय, द्वे शुक्रविसर्गाय चे"ति सुश्रुत एव (सु० शा० ९ अ०)।

तदेतत् क्रमचतुष्टयं वैद्यके शारीरविपर्य्यासस्य। इदन्तु परमत्र विस्मयपदं यदित्थं विपर्य्यस्तेऽपि शारीरे न केवलमुपलभ्यन्ते सत्यसिद्धान्तबोधकानि प्रमाणानि, काश्चित् संज्ञाश्चापि किन्तु रक्तसंवहनादिशारीरक्रियासूत्राण्यपि बहुशः। रक्तसंवहनक्रिया हि नाम—अन्नरसस्य यकृत्-प्लीहप्रचारेण शोणितीभूतस्य महासिराद्वयानीतेन रक्तेन सह मिलितस्य हृदयदक्षिणार्द्धे प्रवेशस्ततः फुस्फुसयोर्गत्वा 'विष्णुपदामृते'[२] संयोगात् परिशोधितस्य पुनर्हृदयवामार्द्धे प्रत्यागमनं, ततः सर्वशरीरप्रचारो धमनीभिस्ततश्च पुनः सिराभीरसायनीभिश्च समानीतस्य महा-

सन्ति च विपर्य्यस्तेऽपि शारीरे प्राचां सत्यसिद्धान्तज्ञानसूचकानि प्रमाणानि यथा (१) रक्तसंवहनक्रिया-वर्णनम्।

---

१ इदं पाश्चात्यशारीरे—Internal secretion of the Testicles—इत्याख्यया प्रसिद्धम्। २ Oxygen.

सिराभ्यां हृदयदक्षिणार्द्धे पुनः प्रवेशः—इति सुपरीक्षितं परीक्षकाणाम्। तदेतत्तत्वमाविष्कुर्वतां प्रतीच्यकोविदानां नाद्यापि वर्षशतत्रयमत्यगात्, परमधुनाऽपि प्राचीन शारीरशेषे श्रूयते—

"दश मूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः। रसात्मकं वहन्त्योज" इति—
( अष्टाङ्गहृदय० शा० ३ अ० )।

सुश्रुतेऽपि "तस्य च हृदयं स्थान"—मित्यादिपूर्वोद्धृतः सन्दर्भ एतदेव लक्षयति, धमनीभिः सर्वशरीरे रसप्रचारस्य वर्णनात्। चरकेऽपि—

"यत् सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः।
संवर्त्तमानं हृदयं समाविशति यत् पुनः।"—
( च० सूत्र० ३० अ० )

इति पाठोऽपि तदर्थसूचक एव। श्वासवायुना "विष्णुपदामृत" ग्रहणं शार्ङ्गधरोक्तन्तु दर्शितपूर्वं, तच्च रक्तस्य फुस्फुसागतस्य शोधनं सूचयतीत्यलं विस्तरेण।

तन्त्रोक्तः षट्चक्रविस्तरश्च प्राचां शारीरज्ञानमपूर्वं बोधयति। तत्र दिगिहैव दर्शितपूर्वा। दर्श्यते चापरं किञ्चित्। तथाहि श्रूयते—

(२) षट्चक्रविज्ञानम्

षट्चक्राणि शरीरे मूलाधार स्वाधिष्ठान-मणिपूरा ऽनाहत-विशुद्धाऽऽज्ञासंज्ञानि। तत्र मूलाधारस्तावत् "ध्वजाधो गुदोर्द्ध्वं", "खगाण्डवद्"-उच्यते—तदेतत् ग्रन्थ्याकारं दृश्यते मृतके गुदास्थिपुरस्ताद् ईड़ापिङ्गलाख्यनाड़ीद्वयमूलभूतम्। तच्च पाश्चात्यानां—Ganglion Coccygeum Impar—इत्याख्यया प्रसिद्धमित्यस्माकं निर्णयः। स्वाधिष्ठानचक्रं "ध्वजमूले"ऽवस्थितं, तच्च पाश्चात्यानां शारीरे—Hypogastric Plexus इत्याख्यया प्रसिद्धं नाड़ीचक्रमिति प्रतिभाति। मणिपूरचक्रं नाम "तस्योर्द्ध्वे नाभिमूले" स्थितं नाड़ीचक्रं प्राचां, स च पाश्चात्यानां—Solar Plexus—इति प्रसिद्धश्चक्राकारो नाड़ीसंघात एव। "तस्योर्द्ध्वे हृत्प्रदेशे"ऽवस्थितं पुनरनाहताख्यं चक्रं, पाश्चात्यनये—Cardiac Plexus—इत्याख्यया प्रथितो नाड़ीसमवायः प्रतीयते। विशुद्धाख्यं तु चक्रमभिन्नं—Carotid Plexus—इत्याख्येन नाड़ीचक्रेण कण्ठदेशावस्थितेन। आज्ञाचक्रं पुनर्भ्रूमध्यानुपूर्व्याऽवस्थितं पाश्चात्यनये—Cavernous Plexus—इत्यनेन तुल्यार्थमिति नः प्रतीतिः। सर्वोर्द्ध्वं च शिरसि विन्यस्तं 'सहस्रारं सर्व-

१ "सिराभिरावृता नाभिश्चक्रनाभिरिवारकैं"रित्यादि प्राचीनप्रयोगश्च एतदेव चक्रं लक्षयतीति न प्रत्ययः।

ज्ञानायतनं, तच्च मस्तिष्कमेवेत्यत्र न सन्देहः। तदेतदखिलं सूक्ष्मानुसूक्ष्मविशेषविवेकेन सम्यग् बुबुधिरे प्राञ्चः—इति षट्चक्रनिरूपणाद्यालोचनया दृढ़ं प्रतीमः। कालवशात्तु हन्त प्रविलुप्तं ज्ञानमाविर्भूतानि च ज्ञानार्ज्जनकण्टकानि शतशः—इति नैषा प्राचां वचनीयता।

कर्त्तव्ये शारीरप्रतिसंस्कारे द्विविधं साधनम्

अथैतर्हि सम्पादनीये शारीरप्रतिसंस्कारे द्विविधमिहोपकरणमुपलभामहे—प्राचीनशारीरञ्च प्रत्यक्षविज्ञानञ्चेति। तत्र प्राचीनशारीरं तावद् बहुधा विपर्य्यस्तमपि नानाविधज्ञाताऽज्ञातसंज्ञानामाकरभूतमद्यापि वरीवर्त्ति। वस्तुपरिचयसाधनानि चात्र नैकधा दृश्यन्ते यतस्ततः प्रासङ्गिकानि, भग्नावशेषहर्म्येषु महार्घरत्नानीव रजोधूसराणि। प्रत्यक्षविज्ञानं पुनर्मृतकपरीक्षयाऽर्ज्जितमिदानीमपरं साधनं सर्व्वसन्देहनिराकरणम्। न चेदमायत्तं नव्यानामेव, नवैतत् तेषामेव शास्त्रं, प्रत्यक्षज्ञानस्य सर्वजनसम्पाद्यत्वात्। न च नाकलयामः प्राचामुपदेशं प्रत्यक्षपरीक्षणविधायकं बहुधा। यत्र तत्र च पुनरुपलभ्यते प्रत्यक्षविरुद्धं शारीरं, दिष्ट्या तत्र तत्रैव प्रायो विषये प्रत्यक्षानुगतसिद्धान्तबोधकानि सन्त्यपराणि प्राचां वचांसि,—येन लभ्यमानानि प्रत्यक्षविरुद्धवचनानि—प्रक्षिप्तानि वा, प्रतिसंस्कर्त्तृकल्पनोत्थानि वा, लिपिकरप्रमादकण्टकितानि वेति युज्यते वक्तुम्।

इत्थं गते चेदानीं शारीरप्रतिसंस्कारः षोढ़ा संविधातव्यः—

शारीरप्रतिसंस्कारस्य षड्विधो विधिः—

(१) प्रसिद्धानां कासाञ्चित् प्राचीनसंज्ञानां परिभाषानिर्द्धारणेन, (२) अनतिप्रसिद्धानामप्रसिद्धानां वाऽपरासां संज्ञानामाविष्करणाऽर्थनिर्णयाभ्याम्, (३) प्राचीनसंज्ञाऽलाभे नवीनसंज्ञानां निर्म्माणेन, (४) प्रत्यक्षदृष्टशारीरस्य सम्यग्वर्णनेन, (५) प्रत्यक्षानुगत्या प्रामादिकपाठ-संशोधनेन, (६) दृश्यविषयैः प्राचीनशारीरस्य सामञ्जस्यसम्पादनेन चेति। तत्र—

(१) परिभाषानिर्णयः

(१) प्रसिद्धानां प्राचीनसंज्ञानां परिभाषानिर्द्धारणविधिः सिराधमन्यादिपदानामर्थविचारप्रसङ्गे दर्शितपूर्वः। सन्ति चापराणि सन्दिग्धार्थपदानि येषामर्थविचारं परिशिष्टे सविस्तरं करिष्यामः।

(२) अनतिप्रसिद्धानां संज्ञानामाविष्करणमर्थनिर्णयश्च यथा यथा शक्यते कर्त्तुं तदुदाहरणमथर्ववेदनिर्दिष्टस्य गवीन्यादिपदस्यार्थविचारे प्रादर्शयाम। याश्च वैद्यके मूत्रवह-मूत्रप्रसेकादिसंज्ञा दर्शितचरास्ता अनतिप्रसिद्धा अपि ज्ञेयार्थाः श्रमविशेषेण। सन्ति च तन्त्रेषु काश्चिदीडा-पिङ्गलाद्याः संज्ञा यासाञ्चार्थनिर्द्धारणमकरवाम। सत्सु चैवं नानाशास्त्रप्रकीर्णेषु बहुषु संज्ञाशब्देषु तदर्थद्योतनाय न निर्म्माणीयाः, न वा प्रयोज्याः संज्ञा नवीनाः—अन्यत्र प्रसिद्धतरसंज्ञाभ्यः। दृश्यन्ते हि वेदेषु काश्चन संज्ञाः शारीर्यो याः प्रायेणाश्रुतपूर्वा वैद्यैः। यथा—अनूकम्, पुरीतत्, गवीन्यौ, वनिष्ठुः, ग्रावस्तुत्—इत्यादयः। सन्ति च वैद्यकग्रन्थेष्वपराः यथा—क्रकाटिका-कुकुन्दर-गोजिह्विकादयः। तन्त्रेषु चान्याः—यथा कुहूः, अलम्बुषा—इत्यादयः। तासामर्थनिर्द्धारणक्रमानपि परिशिष्टे प्रदर्शयिष्यामः।

(२) अप्रसिद्धप्राचीनसंज्ञानामाविष्कारः

(३) प्राचीनसंज्ञाऽलाभे नवीनसंज्ञानां निर्म्माणन्तु शारीरवर्णनविधौ बहुधाऽवश्यकमुपलभ्यते। तत्र च डित्थ-डवित्थादिवन्निरर्थकसंज्ञाकरणादन्वर्थानां श्रुतिसुभगानाञ्च संज्ञानामेव निर्म्माणं श्रेयः, शिष्याणां स्मरणसुखत्वात्।

(३) नवीनसंज्ञानिर्म्माणम्

(४) प्रत्यक्षदृष्टशारीरस्य सम्यग्वर्णनं तावदल्पैः पदैरतिदुष्करम्। अस्ति ह्यत्र पाश्चात्यानां शारीरं प्रभूतविस्तरं यस्यैकैको ग्रन्थश्चरकसुश्रुतवाग्भटानां समष्टिकोटिमारोहति विशालायतनेन। न च तादृशं विपुलविस्तरमधीयेरन् वैद्यकविद्यार्थिनो विषयबाहुल्यात्। न चातिसंक्षेपे कृते सम्यगर्थोऽवबुध्येत, शारीरविषयाणामश्रुतचरत्वात्, प्रत्यक्षमन्तरा दुरधिगमत्वाच्च। एवञ्च प्रत्यक्षानुकल्पभूतानि चित्राण्यपि बोधसौकर्य्याय बहुधा प्रयोज्यानि, तानि च बहुश्रमसम्पाद्यानि प्रचुरव्ययसाध्यानि च।

(४) प्रत्यक्षदृष्टशारीरस्य सम्यग् वर्णनम्

(५) प्रत्यक्षानुगत्या प्रामादिकपाठसंशोधनविधिरपीह प्रदर्शितचरः। अपराणि च पाठसंशोधनानि परिशिष्टे प्रदर्शनीयानि सविचारम्। इह तु विस्तरभिया विरम्यते।

(५) प्रामादिकपाठसंशोधनम्

(६) नव्यप्राचीन-शारीरयोः सामञ्जस्य-विधानम्।

(६) प्रत्यक्षदृष्टस्थविषयैः प्राचीनशारीरस्य सामञ्जस्यविधानं तावद् बहुश्रमविचाराभ्यां साध्यमपि करणीयमेव, प्राचीनप्रत्ययिनां सन्देहनिराकरणाय। दृश्यन्ते हि प्राचीनशारीरे बहव एवाऽपातविरुद्धा विषयाः, येषां विरोधो न केवलं प्रत्यक्षदृष्टस्थशारीरेणैव किन्तु परस्परमपि। तथाहि चरक-याज्ञवल्क्यादिषु षष्ट्यधिकं शतत्रयमस्थ्नां परिगण्यते, सुश्रुते तु शतत्रयं, नव्यशारीरे तु शतद्वयमेव। अस्य पुनः समाधानम्,—"आपातविरुद्धवादिनोऽपि सर्व एवैते ऽवितथमाहुः। गणनाप्रकारभेदात्। तथाहि वेदवादिनो नखदन्तादीनस्थिगणनायामन्तर्भावयन्ति नैवमितरे। तरुणास्थीनि दशनांश्च गणयन्ति शल्यतन्त्रविदः प्राच्याः, नैवं प्रतीच्याः। पृथग्वयोग्रहणाच्च। प्राञ्चो हि यौवनप्रविष्टस्य सञ्चक्षतेऽस्थीनि, पञ्चविंशतिवर्षदेशीयस्य तु प्रतीच्याः"—इत्यादिना मूलग्रन्थे वक्ष्यते। अपराणि च विरोधपरिहारस्य कानिचिदुदाहरणानि यथा।—सुश्रुते श्रूयते "पार्श्वे षट्त्रिंशदेवमेकस्मिन्,द्वितीयेऽप्येवम्" इति, नव्यमते तु एकैकस्मिन् पार्श्वे द्वादशैव पर्शुकाः—इति विरोधे, तत्समाधानं—सुश्रुते एकैकस्मिन् पार्श्वे द्वादश पर्शुकाः, द्वादश उपपर्शुकाः, द्वादश पर्शुकामूलभागाश्चेति गणनया सुकरम्। पर्शुकामूलभागा हि तन्मुण्डसहिताः पृथगेव दृश्यन्ते, आपञ्चविंशतिवर्षात्। एवं च सुश्रुते—"एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणि, तानि पञ्चदश। तलकूर्चगुल्फसंश्रितानि दश। पार्ष्ण्यामेकम्। जङ्घायां द्वे। जानुन्येकम्। एकमूराविति। त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति"—इत्यादौ "एकैकस्यां तु पादाङ्गुल्यां त्रीणि त्रीणि द्वे अङ्गुष्ठे इति चतुर्दश। तलकूर्चगुल्फसंश्रितानि एकादश"—इति पाठसंशोधनं सर्वथा युज्यते, अन्यथा सन्धिवर्णनोक्तेन "एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयो द्वावङ्गुष्ठे, ते चतुर्दश" इति स्ववचसा विरोधो दुर्वारः, प्रत्यक्षदर्शनतश्च तादृगेव पाठः साधीयानिति दिक्।

अस्थ्यादिसंख्यासामञ्जस्यप्रदर्शन्यः सारण्यस्तु विदितशारीराणामेव बोद्धव्याः—इति कृत्वा परिशिष्टे संयोजनीयाः।

ग्रन्थनिर्माणक्रमो ग्रन्थकर्त्तुः श्रमपरिचयश्च

तदेतदखिलं प्रतिसंस्कारविधिं स्मारं स्मारमस्माभिर्यथामतिश्रमपरैः प्रत्यक्षशारीराख्योऽयं ग्रन्थो निरमायि। अत्र चादौ शिष्याणां सम्यगवबोधाय परिभाषा निरूपिता, नवीनसंज्ञाश्च तदन्वर्थताञ्च स्मरणसुखताञ्च प्रकल्प्य यथाशक्ति प्राचां पदाङ्कानुसारत एवोद्भाविताः। गृहीताश्च वेदादिभ्यो वैद्यकग्रन्थेभ्यश्च नवीनायिताः काश्चित्

पुराण्य: संज्ञा गवीन्यादय:। प्रत्यक्षदृष्टशारीरस्य वर्णनन्तु यावच्छक्यमल्पैरेव पदै: शिष्योपयोगितां मनसिकृत्य व्यधायि। चित्राणि चानल्पानि विषयावबोधसहायकानि श्रमलाघवञ्च व्ययकार्पण्यञ्चाऽकृत्वैव संयोजितानि। प्रदत्तानि च शारीरसंज्ञानां नवीन-पुराणानां निरूपणसौकर्य्याय पत्राधस्तनीषु टीकासु आंग्लभाषासंज्ञा:, दुर्बोधपदानां सरलार्थाश्च। एवं हि पाश्चात्यायुर्वेदमात्रज्ञानां डाक्टर-पदवाच्यानां भिषजामपि साहाय्यमज्ञातशारीराणां वैद्यविद्यार्थिनां सुलभं स्याद्, अर्थाश्च साधु प्रतीयेरन्निति। प्राचीनपाठसंस्कारं सविस्तरं नव्य-प्राचीनमत-समन्वयञ्च ग्रन्थसमाप्तौ परिशिष्टभागे यथाशक्ति सविस्तरं विधास्याम:।

न चायं ग्रन्थ:कस्यचित् पाश्चात्यग्रन्थस्यानुवाद:

इदञ्चेह कृपया विमृशन्तु प्रेक्षावन्तो यदेष प्रत्यक्षशारीराख्यो ग्रन्थ: कस्यचिदपि पाश्चात्यशारीरग्रन्थस्यानुवादो न भवतीति। यै: खलु पूर्व तादृशोऽनुवादो विहित: पाश्चात्यविद्याप्रवीणैस्तेषां हि ग्रन्थेषु दृश्यतेऽतिदारुण: संज्ञाविपर्य्ययो दुर्बोधता च, बहूनां प्राचीन-संज्ञानां निरङ्कुशप्रयोगात् पाश्चात्यसंज्ञानां तादवस्थ्येनोपलम्भाच्च। न हि तादृशमप्राच्यमपाश्चात्यं भाषासङ्करं सम्यगुच्चारयितुमलं वैद्यविद्यार्थिन:, किं पुनर्बोद्धुम्। एवंविधहेतोरतिविस्तराभिधानाच्च तत्र न भिषजामुन्मुखीभाव:। नापि तेनायुर्वेदोपकार:। तदिदमाकलयतामस्माकं श्रमराशिं कृततादृश-श्रमा एव बुध्येरन्। साफल्यन्तु पुनरस्मद्ग्रन्थस्य निरवधिना कालेन च विशेषज्ञजनैश्च निर्णेष्यते, नात्र वयं प्रभवाम:।

एतत् परमतीव सन्तोषमावहति यद् ये खलु विद्यार्थिनो भिषजश्च ज्ञान-पिपासवो नानादिग्देशागता: प्रत्यक्षशारीरस्याद्यभागमस्माभिरध्यापिता—स्तै: सुगम एवामन्यत दुर्बोधोऽप्ययं विषय:। स्मरन्ति च ते सानन्दमीदृशान् स्मारक-श्लोकान् नीरस दु:स्मर-विषयाणाम्—यथा—

"भर्म्मरश्च जतूका च शुक्तिका चाथ सीरिका।
खसंज्ञश्चोर्द्ध्वहन्वस्थि ताल्वस्थ्ना संहितानि षट्।"

( प्रत्यक्षशारीरे ताल्वस्थिवर्णने—८५ पृ० )

अथैवं सुमहता प्रयत्नेन साधितेऽप्यस्मिन् ग्रन्थविरचनकार्य्ये अस्मद्दृष्टि-दोषाद्वा मुद्राकरत्रुटीनां दुष्परिहरत्वाद्वा अस्माद्दृशाऽल्पज्ञजन

त्रुटीस्वीकारः क्षमाप्रार्थना च

भ्रम-प्रमादसौलभ्याद्वा यत्र यत्र स्खलनमभूत्तत्र दोषज्ञ-जन-करुणैव नः शरणम्[१] । प्रार्थयामहे च प्रवीणान्—गुणमात्रपक्ष-पातपरायणैरत्रभवद्भिरध्ययनाध्यापनाभ्यामस्मद्ग्रन्थस्य सफलीकरणीयो नः श्रम इति। मा भूदतःपरमुपहास्यता प्राच्यवैद्यानां पाश्चात्यवैद्यैः शारीराऽज्ञान-निमित्तम् ।

इदञ्चावसाने निवेद्यम्—

आ-काश्मीर-कुमारिकं कृतधियाम् आ-चट्टल-द्वारकं
येषां पत्रशतैरिहास्म सुतरां प्रोत्साहिता दुर्गमे ।
येषाञ्चाथ नियोगतः श्रममिमं सत्यं लघुं मन्महे
तेषामेव कृतित्वमत्र न तु नोऽनुज्ञावहा वै वयम् ॥

इति—विद्वज्जनकृपार्थिनो

गणनाथस्य

१ कृपया शुद्धिपत्रदर्शनेन शोधनीया दृष्टाशुद्धयः पाठाः, विज्ञाप्याश्चापरे अस्माभिरदृष्टाशुद्धय इत्यभिप्रायः ।

# प्रत्यक्षशारीरम् ।



## ओं नम आयुर्व्वेदाचार्य्येभ्यः ।

कालिन्दीजलनीलिम्नो[1] नीलं ज्योतिरुपास्महे[2] ।
यद्भासं[3] मनुभासन्ते ज्योतींषि[4] च जगन्ति च ॥ १ ॥

वैद्यविद्या-महाम्भोधि-पारोत्तीर्ण-महाधियम् ।
विद्याकल्पद्रुमं तातं विश्वनाथं गुरुं नुमः ॥ २ ॥

यदन्तरगतं[5] महः परमहर्षिबोधोज्ज्वलम्
विराट्पुरुषधामजि[6]न्निखिलरोदसी[7] व्यानशे[8] ।
विलोप-परकल्पना[9]-जलदजाल-मन्दप्रभो
न कस्य विषयः शुचां स इह वैद्यविद्यारविः ? ॥ ३ ॥

आत्रेयादिमहर्षिभिर्निजतपःप्रज्ञानं[10] दीप्तेक्षणै-
र्दुर्ज्ञेयान्यपि[11] चेत्करामलकवत्तत्त्वानि संजज्ञिरे[12] ।
सुज्ञेयं करणैः[13] पुरो नयनयोर्देदीप्यमानं तनोः
स्थूलं तत्त्वमपास्य[14] हन्त नु भिषङ्मन्या न लज्जेमहि[15] ? ॥ ४ ॥

---

१ यमुनाजलनीलतायाः सारभूतमिति शेषः। यद्वा कालिन्दीजलस्य नीलिमेव नीलिमा यस्य तादृशस्य। २ श्रीकृष्णरूपमिति फलितार्थः। ३ यस्य दीप्तिं। ४ सूर्य्यचन्द्रादीनि। तथाच श्रुतिः—"तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति।" ५ यस्य अभ्यन्तरगतं तेजः। ६ सहस्रशीर्षो विष्णोस्तेजःस्पर्द्धि, तथाचोक्तं—"ध्येयः सदा सवितृमण्डलमध्यवर्त्ती"त्यादि। ७ समग्रद्यावापृथिव्यौ। ८ व्याप। ९ विलोपः—अग्निवेशसुश्रुतोपधेनवैतरणादिमहर्षिप्रणीतमूलग्रन्थानामनासादनं; परकल्पनाः—नानानार्षजनोद्भावितप्रक्षिप्तमतादीनि। १० प्रज्ञानं परमज्ञानं, तपःप्रज्ञानाभ्यामुन्मीलितदिव्यदृष्टिभिः। ११ पारलौकिकान्यपि किमुत ऐहिकानि। १२ सम्यग् ज्ञातानि। १३ इन्द्रियैः। १४ शारीरं तत्त्वमज्ञात्वैव। १५ न लज्जेमहीति काकुः।

प्राच्यप्रतीच्यगुरुसङ्घमुपास्य तस्मात्
तत्तद्भिषग्जनवचांसि विचार्य्य सम्यक् ।
प्रत्यक्षदृष्टनिखिलार्थकमर्थ्य[2] शास्त्र-
मुद्योतयन्न भवितास्मि विगीतकृत्यैः[3] ॥ ५ ॥

प्राचां गिरः शिरसि नोऽथ तदीयशैली
प्रायः पवित्रयति पद्धतिमस्मदीयाम् ।
भागीरथीव्यतिकरैः[4] कुरुते महिम्ना
रथ्यापयोऽतिमलिनं विमलं क्षणेन ॥ ६ ॥

प्राचां विरोध[5] इह नास्ति, कु[6]तोऽथ भाति,
प्रत्यक्षवस्तुविषये सहनीय एषः ।
आर्षे निवन्धृशतकूट[7]वचोभिरष्टे
शास्त्रेऽपि शस्यतुषभेदविदो[8] विदः[9] स्युः ॥ ७ ॥

धान्वन्तरीयमतमाकुलतामुपेतं
स्वच्छं पुनर्विदधता मृतकान् परीक्ष्य ।
अग्रन्थि[10] सम्प्रति मया नवको निबन्धो
बोद्धा श्रमस्य यदि तं शिरसा नमामि ॥ ८ ॥

तनुमतिरपि गुरुकरुणां गणनाथः सोऽयमाश्रयन् शरणम् ।
रचयति शरीरतत्त्व-प्रत्यक्षीकरणकारणं दीपम् ॥ ९ ॥

क्षमध्वमिह दोषान्मे[11] चिनुध्वं गुणलेशकान्
आद्रियध्वञ्च यत्सत्यं प्रत्य[12]क्षे को नु संशयः ? ॥ १० ॥

---

१ पृथिव्यां प्राच्याः भारतवर्षीयाः, प्रतीच्या यूरोपीयाः । २ शवच्छेदादिना प्रत्यक्षीकृतसमस्ततत्त्वम् । ३ निन्दितकर्म्मा । ४ सम्पर्कः । ५ यतः अनार्षजनप्रमादादिजन्य एव दृश्यते लभ्यमानग्रन्थेषु शारीरवस्त्वर्थ-व्याकुलीभावः । दृश्यतामुपोद्घातः । ६ यथा सिराधमन्यादिशब्देषु । ७ निवन्धृणां शतैः प्रक्षिप्तानि यानि व्याकुलार्थानि वचांसि तैर्दूषिते । ८ इदं शस्यं ग्राह्यमिदन्तुषन्त्याज्यमिति भेदज्ञाः । ९ पण्डिताः । १० व्यरचि । ११ क्वचित् प्रसिद्धभ्रान्तमतविरुद्धकथनादीन्, दुस्तरेऽस्मिन् शास्त्रे स्खलितानि च । १२ तत्रापि सकलजन-साधारणे स्थूलप्रत्यक्षे । उक्तञ्च केनचित् प्रसङ्गान्तरे—"अध्यापयन्ति यदि दर्शयितुं क्षमन्ते सूतेन्द्रकर्म्म गुरवो गुरवस्त एव" इति । स च न्यायः शारीरविषयेऽपि प्रयोज्यः । अप्रत्यक्षीकृतशारीरतत्त्वाः केचन चेदत्रापि बिवदेरन्, का गतिः ?

# प्रत्यक्षशारीरम् ।

## प्रथमोऽध्यायः ।

अथातः शारीरोपक्रमणीयमध्यायं* व्याख्यास्यामः ।

इह खलु शरीर-मनः-शरीरि[1]-समवायः पुरुष इत्युच्यते, तद्दुःखसंयोगविशेषाश्च[2] व्याधय इति । दुःखसंयोगश्चासौ द्वेधा समुत्पद्यते, शरीरव्यतिकरेण[3] मनोव्यतिकरेण चेति । तत्र शरीरनिष्ठा[4] व्याधयः शारीरैरुपचारैरुपक्रान्ताः प्रतिनिवर्त्तन्ते, मनोनिष्ठाश्च[5] भूम्ना[6] तथैव, अपरैश्च समाधि[7]सान्त्वादिभिरुपायैः प्रायेण शरीरद्वारै[8]प्रयुक्तैः । तस्मात् व्याध्यायतनमिति चिकित्साधिष्ठानमिति च कृत्वा शरीरमेवादौ भिषजां विजिज्ञासितव्यं[9] भवति । आहुश्च प्राञ्चः—"शरीरविचयः[10] शरीरोपकारार्थमिष्यते, भिषग्विद्येयम् । ज्ञाते हि शरीरतत्त्वे शरीरोपकारकेषु भावेषु ज्ञानमुत्पद्यते । तस्मात् शरीरविचयं प्रशंसन्ति कुशलाः"—इति ( च॰ शा॰ ६ अ॰ ) ।

इतश्चेदं शरीरं मातापित्रोरान्तरभावभाविता[11] दृष्टविशेषाकृष्टशुक्रशोणितसंयोगादुद्भिद्यमानं क्रमशस्तैस्तैरवस्था[12] विशेषैरभिव्यज्यमानस्वरूपं रसादिशुक्रान्तधातूनामनेकाशयसिराधमन्यादीनाञ्चाधारभूतमभिसम्पद्यते प्राणायतनं नाम । प्राणा हि शरीरमाश्रित्य म्रियन्ते[13] । तस्मात् प्राणान् रक्षितुकामेन शारीरज्ञानमवश्यमन्वेष्टव्यं भवति ।

---

* शारीरस्योपक्रमणमारम्भः, तदधिकृत्य कृतम् (छप्रत्ययः)। एवमग्रेऽपि। १ शरीरी आत्मा, समवायः समष्टिः । तथाह चरकः "सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवत् । लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम् ।" २ अयं सुश्रुतस्यानुवादः (सु॰सू॰१अ॰); तस्मिन् पुरुषे यो दुःखसंयोगस्तस्य विशेषाः विशिष्टलक्षणसमष्टिभूता भावा रोगाः । ३ सम्पर्केण । ४ शारीराः । ५ मानसाः । ६ प्राचुर्येण । ७ समाधिश्चित्तैकाग्र्यम्, सान्त्वं मधुरवचः । ८ "समं कायशिरोग्रीवं धारयन्नचलं स्थिरः । संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्" इत्यादिभगवदुक्तरीत्येति भावः । ९ विशेषेण ज्ञातुमीप्सितम् । १० अङ्गविनिश्चयविद्या । ११ गर्भाधानकाले यथा यथा पित्रोरान्तरा भावास्तथा तथा गर्भस्यापि सम्भवन्ति, अदृष्टविशेषतश्च तस्मिंस्तस्मिन् काले गर्भसम्भवः । १२ कललाद्यवस्थाविशेषैरित्यर्थः । तथाहि सुश्रुतः—"प्रथमे मासि कललं जायते" ( सु॰ शा॰ ३ अ॰ ) इत्यादि । १३ तिष्ठन्ति ।

द्विविधः पुनरस्य शरीरस्य विज्ञानोपायो भवति,—बाह्य आभ्यन्तरश्च। तत्र बाह्यः पञ्चभिरिन्द्रियैर्विशेषतस्तु चक्षुषा नानाविधयन्त्रादिसहकृतेनोपलक्षितो[1] जीवच्छरीरं मृतकशरीरञ्च प्रति प्रयुज्यमानो ज्ञानमुत्पादयति। आभ्यन्तरस्तूपायस्तपोज्ञानर्द्धिसमृद्धै[2]राश्रीयमानो[3] ज्ञानचक्षुःस्वरूपः स्थूलेन्द्रियप्रयत्नमन्तरेणैव सर्वमपि सूक्ष्मानुसूक्ष्ममपि प्रकाशीकरोति। सोऽयमुत्तर उपायो योगिभिरेव शक्यः प्रयोक्तुं नास्मादृशैरिति बाह्यमुपायमाश्रित्य वक्ष्यामः।

तथाच सुश्रुतः—"तस्मात् समस्तगात्रमविषोपहतमदीर्घव्याधिपीड़ितमवर्षशतिकं निःसृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गमप्रकाशे देशे कोथयेत्[4]। सम्यक् प्रकुथितञ्चोद्धृत्य देहं सप्तरात्रादुशीरबालवेणुवल्कलकूर्चा[5]नामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषेति[6]" (सु. शा. ६ अ.)।

तदेतत् खलु षड़ङ्गं शरीरं शरीरविदो भाषन्ते। अङ्गानि चास्य "शाखाश्चतस्रो मध्यं पञ्चमं षष्ठं शिरश्चेति[7]"—(सु. शा. ५ अ.)।

तत्र ग्रहणधारणस्थूण[8]नचलनादिसहायाः शाखाः,—द्वौ बाहू, द्वे च सक्थिनी। शोणितसंवहनश्वसनान्नविपाचनमूत्रोच्चार[9]विभजनाद्याशयाधारो मध्यं, प्रकाण्ड इव महीरुहस्याश्रयः शिरसः शाखानाञ्च। श्वासान्नद्वारयोर्मुखमण्डलस्य चाधिष्ठानं, संज्ञावहचेष्टावहानां नाडीनां[10] बुद्धीन्द्रियाणाञ्च मूलाधिष्ठानं शिरः, तद्धि ज्ञानायतनमुत्तमाङ्गमाहुः मस्तिष्काधारत्वात्। मस्तिष्कं[11] हि

---

१ अणुवीक्षणादिसूक्ष्मदर्शनयन्त्रसहायेन। तथाहि—सिराधमनीस्नायनीनां सूक्ष्माणि जालकानि मस्तिष्कसुषुम्नादिगता विशेषाश्च अणुवीक्षणयन्त्राद्विना न सम्यग् द्रष्टुं शक्याः। २ दिव्यज्ञानसम्पन्नमहर्षिभिः। ३ प्रयुज्यमानः। ४ गलितं कुर्य्यात्। ५ कूंचीति भाषायाम्। ६ स्थूलोऽयमुपायः सर्व्वथा सर्वानेव विशेषान्न दर्शयितुं क्षमः। पाश्चात्यनये तु कोथनिवारणैरुपायैरभिरक्षिते शरीरे ते ते विशेषाः सूक्ष्मानुसूक्ष्माः स्पष्टं परिदृश्यन्ते चक्षुषा। अस्थिविशेषास्तु निर्मांसकङ्काल एव सम्यग् ज्ञायन्ते। ७ चरके तु शिरोग्रीवमिति पठ्यते, मध्यं मध्यकायः, अन्तराधिसंज्ञाऽपि चरकेऽस्यैव। ८ स्थूणाः स्तम्भाः स्थूणमं तत्कर्म्मकरणमवलम्बनम्। विष्ठा ९ शकृत्। १० द्विविधा नाड्यः, संज्ञावहाश्चेष्टावहाश्च। तत्र संज्ञावहाः—शब्दादीन् विषयान् मस्तिष्काभिमुखं वहन्ति, येन तत्तद्विषयग्रहणं भवति। चेष्टावहास्तु—मस्तिष्कतश्चेष्टाप्रवर्त्तकान् वेगानादाय पेशीः क्रियावतीः कुर्व्वन्ति। ११ अत एव वाग्भटः—"ऊर्द्ध्वमूलमधःशाखमृषयः पुरुषं विदुः। मूलप्रहारिणस्तस्मात् रोगान् शीघ्रतरं जयेत्॥ सर्व्वेन्द्रियाणि येनाऽस्मिन् प्राणा येन च संश्रिताः। तेन तस्योत्तमाङ्गस्य रक्षायामादृतो भवेत्॥" (वाग्भट. उत्तरस्थान, २४ अ.)।

नाम सर्वज्ञानाकरतया मन्यन्ते मनीषिणः। सोऽयं षडङ्गस्य देहस्य परिचयो भवति बीजरूपो यमधिकृत्य विस्तरोऽत ऊर्द्ध्वम् ।

भवन्ति चात्र—

"शरीरं सर्वदा सर्वं सर्वथा वेद यो भिषक् ।
आयुर्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदम् ॥" ( च. शा. ६ अ. )
"शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः ।
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः ॥
प्रत्यक्षतो हि यद् दृष्टं शास्त्रदृष्टञ्च यद् भवेत् ।
समासतस्[2]तदुभयं भूयो ज्ञानविवर्द्धनम् ॥" ( सु. शा. ६ अ. )

---

## द्वितीयोऽध्यायः ।

अथातः शारीरपारिभाषिकीय[3]मध्यायं व्याख्यास्यामः ॥

त्वचः कलाः पेश्यः स्नायवः सिरा धमन्यो रसायन्यो नाड्यो धातवो रसादिशुक्रान्ताश्चेति शारीरोपादान[4]समुच्चयः। आशयाः श्वसनान्नविपाचनादि-क्रियाकरा बहवः। पञ्च ज्ञानेन्द्रियाधिष्ठानानि[5]। पञ्च कर्म्मेन्द्रियाधिष्ठानानि। नव द्वाराणि। ललाटभ्रूगण्डादीनि चोपाङ्गानि—इति प्रत्यङ्गावयव-समासः। तत्र—

**त्वचो नाम**—सर्व्वदेहावरणरूपा भूमिः स्पर्शेन्द्रियस्य[6], स्रोतसाञ्च स्वेदवहानां, रोम्णामपि सरोमकूपाणाम्। ताः स्थूलदृष्ट्या स्तरद्वयविभक्ताः,—

---

१ दूरीकृत्य। २ समुच्चयतः। ३ शारीरशास्त्रे वक्ष्यमाणे या याः संज्ञाः प्रयोक्तव्याः, तासां परिभाषा अवश्यमेवादौ वक्तव्या, अन्यथा प्रचलितार्थेषु तेषां प्रयोगाननुसृत्य व्याकुलीकुर्य्युरर्थान् शिष्या इत्यभिप्रायेणोपक्रम्यतेऽयमध्यायः। ४ न खल्वत्रोपादानानि उपादानकारणानि, किन्तु उपादानवत् शरीरनिष्पादकानि। ५ श्रोत्रत्वङ्नेत्ररसनाघ्राणाख्यानि कर्म्मेन्द्रियाधिष्ठानानि वाक्पाणिपादपायूपस्थानि। यानि तु लोके निर्द्दिश्यन्ते इन्द्रियाणीति तानि हि इन्द्रियाधिष्ठानानि। इन्द्रियाणि त्वतीन्द्रियाणि। ६ स्पर्शेन्द्रियाधिष्ठानमित्यर्थः। भूमिपदेन परतोऽपि सम्बन्धः।

बहिस्त्वग्भागोऽन्तस्त्वग्भागश्चेति। तत्र बहिस्त्वङ् नामातीव तन्वी कृष्ण-गौरादिवर्णाधारा वह्निस्पर्शेण प्लोषपिड़काव्यञ्जना[1] च। अन्तस्त्वङ् नाम स्थूला शरीराभिरक्षणी स्नेहादिकर्षणी च। सैव प्रधानायतनं स्पर्शभूमिः स्वेदस्रुताश्च मार्गाणाम्।

प्राञ्चस्तु सूक्ष्मदृष्ट्या क्षीरस्येव सन्तानिकाः सप्त षड्[2] वा त्वचो मन्यन्ते। तासु प्रथमा अवभासिनी नाम, तस्या बाह्यत्वग्भागेनाऽभेदः। अपरासान्तु अन्तस्त्वग्भागेऽनुप्रवेशः।

**कला नाम**—सूक्ष्मकौषेयवासःसमाकारा नानाविधसंस्थाना मांसस्यास्थ्न आशयानाञ्च सर्वेषामन्तर्बहिरावृत्य तिष्ठन्ति, यथादेशकर्म संज्ञाञ्च लभन्ते। ताः "धात्वाशयान्तरमर्य्यादा"[3]—इति पूर्वे (सु. शा. ४ अ.)। आहुश्च—

"स्नायुभिश्च[4] प्रतिच्छन्नान् सन्ततांश्च जरायुणा।
श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः॥" (सु. शा. ४ अ.)

कलाविशेषांस्तु तत्र तत्र वक्ष्यामः।

**पेश्यो नाम**—प्राणभृतां सकलचेष्टासाधनानि[5]। ताः मांसमय्यः

---

१ वह्निदाहेन या प्लोषपिड़का समुदेति तया व्यज्यते तन्वी बहिस्त्वक् पृथगेवान्तस्त्वच इति। २ षड़िति चरकस्य मतं, सप्तेति सुश्रुतस्य (सु. शा. ४ अ.)। पाश्चात्यमतेऽप्येवमणुवीक्षणदृश्यश्च। सन्तानिका सरः। अवभासिनीति सुश्रुतोक्ता संज्ञा, चरकमते तु प्रथमा उदकधरा नाम। कृष्णगौरादिवर्णाधारत्वात् अवभासिनी, प्लोषपिड़कायां जातायामुदकेन तां पूरयतीति उदकधरा वा। ता एतास्त्वचः षड़ङ्गं शरीरमवतत्य तिष्ठन्ति। ३ धातवो—रसादीन्याधेयानि, आशया आमाशयाद्या आधाराः, तेषामन्तरे मध्ये मर्य्यादा व्यवधायिकाः तत्तदाशयानामन्तरावरण्यः कलाः सूक्ष्मपटरूपाः। इह धातव आशयाश्चेत्युपलक्षणमाधेयाधारार्थकं पदद्वयम्। तेनामाशयादौ ध्रियमाणस्यान्नादेरपि ग्रहणं, तथाच आमाशयान्तरावरणी या कला सैव तत्र व्यवधायिनी सेयं भुक्तधरा नाम, अस्थ्यन्तरावरणभूता या कला साऽसौ मज्जधरा नामेति दिक्। तदेतदुच्यते—"धात्वाशयान्तरमर्य्यादा" इति। पूर्वे—धन्वन्तरिप्रमुखाः। ४ स्नायुभिः तदाख्यैः शुभ्रसूक्ष्मसूत्रैः। प्रतिच्छन्नान् परस्परानुप्रवेशेन निष्पन्नान्। जरायुः सूक्ष्मजालकं तेन सन्ततान् व्याप्तान्। श्लेष्मणा श्लेषकाख्येन तरलपिच्छिलपदार्थेन वेष्टितान्। तथाच सूक्ष्मकौषेयवासःसदृशाः कला इति फलितोऽर्थः। [कला = mucous membrane.] ५ सकलचेष्टासाधनानि सकलचेष्टानां साधनभूतानि। चेष्टाप्रवृत्तिस्तु मस्तिष्कतश्चेष्टावहनाड़ीराश्रित्य भवति, ताश्च नाड्यः पेशीरनुप्रविष्टा नियमेन। तथाच चेष्टाप्रवृत्तेः समागतायाः साधनभूता अधिष्ठानभूता वा पेश्यः। मांसमय्यः—मांसोपादानाः, न हि मांसं नाम पेशीतः किञ्चित् पृथगस्ति।

स्वरूपेण प्रायः स्थूलमध्या रज्ज्वाकाराः क्वचित् प्रच्छदाद्याकाराश्च[1]। ता द्विविधाः स्वतन्त्राः परतन्त्राश्च क्रियावैशेष्यात्[2]। तत्र परतन्त्राणां प्रायः सर्वासामेव पेशीनामेकैकस्या द्वौ द्वावन्तौ रजतवर्णावस्थिनिबद्धौ चोभयतः[3] प्रायेण। आकुञ्चन-प्रसारणाभ्याञ्च पेशीनां नानाविधचेष्टाभिनिर्वृत्तिः। रज्ज्वाकाराणाञ्च पेशीनां शुभ्रमसृणदृढ़प्रान्तभागाः कण्डरा[4] इत्युच्यन्ते। ताः स्वरूपतः स्नायुनिर्मिता रजतशुभ्रा बहुभारसहाश्च। तासां पेशीष्वेव[5] स्नायुष्वेव वाऽनुप्रवेशः। "स्नायवो वृत्ताः कण्डरा भवन्ती"ति हि प्राञ्चः (सु शा. ५ अ)।

**स्नायवो नाम**—सान्द्रमसृणशणगुच्छसमाकाराः सन्धिबन्धनार्थाः प्रायेण। स्नायुशब्दश्चैष[6] द्वयोरर्थयोर्दृश्यते प्रयुक्तः—स्नायुसंहतौ स्नायुव्यक्तिषु च। तत्र प्रथमः अस्थिसन्धिबन्धनरूपोऽर्थः, स मुख्यः—"प्रतानवतीभिर्हि स्नायुभि-र्दृढ़ीकृताः सन्धय"—इति पूर्व्वाचार्य्योक्तेः। अथ द्वितीयः स्नायुव्यक्तिरूपोऽर्थः स गौणः। तेन स्नायुशब्दः क्वचित् शणसूत्रवत् दृढ़शुभ्रसूक्ष्मसूत्राण्यभिधत्ते। तथाहि कलासु कण्डरासु पार्श्वपृष्ठोरःपेश्यन्तेषु आमाशयपक्वाशयवस्त्यन्तभागेषु च दृश्यते यः स्नायुशब्दः प्रयुक्तः पूर्व्वैः सोऽस्मिन्नेवार्थे। आहुश्च—

"स्नायूश्चतुर्विधा विद्यात्तास्तु सर्वा निबोध मे।
प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा॥
प्रतानवत्यः शाखासु सर्वसन्धिषु चाप्यथ।
वृत्तास्तु कण्डराः सर्वा विज्ञेयाः कुशलैरिह॥
आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु।
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ॥

१ प्रच्छदाद्याकारीः—यथा ललाटसङ्कोचनी पेशी, सेयं प्रच्छदवदास्तृता शिरश्छादयति। २ क्रियावैशेष्यञ्चे-दृशम्—अन्त्रादिनिर्म्मापिकानां पेशीनां क्रियासु नास्मदिच्छायाः प्रभुता, स्वतन्त्राः हि खल्वेताः। करसञ्चालनादि-करीनां पेशीनां क्रियास्त्वस्मदिच्छाधीनाः अतएव ताः परतन्त्राः इच्छानुगा वा। ३ एकैकतः अस्थिप्रदेशविशेषे (क्वचिदन्यत्र वा) दृढ़निबद्धौ, तथाच पेश्याः सङ्कोचे सति अस्थिविशेषैकदेशाकर्षणेन अवयवविशेषस्य चेष्टाविशेषः। चेष्टाभिनिर्वृत्तिः—चेष्टानिष्पत्तिः। ४ कण्डराः = Tendons. ५ पेश्यवयवत्वात् पेशीषु, स्नायुनिर्म्मितत्वात् स्नायुषु वा। ६ हन्त तावदयं स्नायुशब्दो वङ्गभाषायां कदाचित् केषाञ्चिद्भ्रान्तप्रयोगदर्शनात् नाड्यर्थे (*To imply Nerves*) प्रयुज्यते बहुशः। तथाच न भ्रमितव्यम्। न खल्वेष स्नायुशब्दः कदाचिदपि कथञ्चिदपि संज्ञा-वहचेष्टावहनाड़ीरूपमर्थं प्रकाशयति। यश्च तावच्छास्त्रे जातिव्यक्तिरूपो द्विविधोऽर्थो दर्शितः स युक्त एव यथा तृणशब्दस्तृणविशेषे तृणजातौ च प्रसिद्धो दृश्यते यथा च लोहम्रगादयोऽपि शब्दाः। स्नायुः = Ligament or Fibrous tissue.

नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्वृता ।
भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता ॥
एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः ।
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः ॥" ( सु. शा ५ अ. )

**सिरा नाम**[1]—अविशुद्धशोणितवहाः सर्वदेहगाः प्रणाल्योऽस्मिन् शास्त्रे । ताभिः शरीरप्रचारान्मलिनीभूतं शोणितमभिप्रवर्त्तते हृदयाभिमुखम् । निखिलदेहव्याप्तानामपि तासां मिलितानामाशयो हृदयं समुद्र इवापगानाम् ।

**धमन्यो नाम**—विशुद्धशोणितवहाः सर्वदेहगाः प्रणाल्योऽस्मिन् शास्त्रे । तासां मूलं हृदयं, तद्धि धमनीद्वारेण सर्वत्र शरीरे शोणितं धमति विक्षिपति वा । ताभिर्जीवरक्तवाहिनीभिः केदार इव कुल्याभिरभिप्रीयते शरीरम् ।

**रसायन्यो नाम**[3]—लसीकाख्यतन्वच्छरसवाहिन्यः प्रणाल्यः । ता अपि निखिलदेहप्रसृताः कक्षावंक्षणगलादिषु प्रदेशेषु गुञ्जानिम्बफलाद्याकारै र्ग्रन्थिभिरनुविद्धाश्च[4] ।

**नाड्यो नाम**—मृदुसूक्ष्मसूत्रसंघातमया नीरन्ध्रास्तन्त्र्योऽस्मिन् शास्त्रे । ताश्च समाश्रित्य संज्ञाचेष्टयोरभिप्रवृत्तिः । तासां भगवान्वायुरधिष्ठाता । स हि विभुरचिन्त्यशक्तिरखिलान् शब्दादीन्विषयानादत्ते प्रवर्त्तयति च नानाविधाश्चेष्टाः क्रमेण संज्ञावहाश्चेष्टावहाश्च नाडीरधिष्ठाय । तासां च निखिलानां मूलं मस्तिष्कं सुषुम्ना च ।

---

१ सिराधमनीशब्दयोरस्मिन् शास्त्रे विशिष्टार्थयोर्निरोधः, अन्यथा लभ्यमानचरकसुश्रुतादिषु प्रतिसंस्कर्तृप्रयोगाननुसृत्य व्याकुलीकुर्य्युरर्थानविशेषविदः । एतत्प्रासङ्गिको विचारस्तु उपोद्घाते सविस्तरं द्रष्टव्यः । [सिराः = Veins ; धमन्य = Arteries] । २ शरीरप्रचारान्मलिनीभूतं हि शोणितं फुस्फुसप्रचारेण प्राणवायुसमानीत-विशुपदामृत ( Oxygen ) संयोगात् शुद्धीभूतं हृदयन्त्रेण विक्षिप्यते सर्वतो धमनीभिः । किञ्चिदर्थविपर्य्ययस्तु फुस्फुसगामिधमन्यां फुस्फुसागतसिरासु च वक्ष्यते । तत्र हृदयान्निर्गता धमन्यः, हृदयाभिमुख्यः सिरा इत्यादि प्रयोगः । ३ रसायन्यः—Lymphatics. रसायनीति चरककृतेयं संज्ञा (च. वि. ५ अ.) । ४ व्याप्ताः । ५ नाडीशब्दस्येह तन्त्र्यर्थे निरोधः । ताश्च नाड्यो विद्युद्वहधातुमयसूत्रवत् रन्ध्रहीना स्तन्त्र्यः । तासु काश्चित् शब्दादिसंज्ञाः प्रापयन्ति मस्तिष्काभिमुखं, ताः संज्ञावहा नाम । अपरास्तु मस्तिष्कतो बहिर्मुखं नयन्ति चेष्टावेगविशेषान्, ताश्चेष्टावहा नाम । ६ स चायमचिन्त्यशक्तिर्वायुर्नाम येन समुत्पाद्यन्ते अन्तर्मुखा बहिर्मुखाश्च वेगाः । अतएव चरकः "वायुस्तन्त्रयन्त्रधरः, प्राणोदानसमानव्यानापानात्मा, प्रवर्त्तकश्चेष्टानामुच्चावचानां, नियन्ता प्रणेता च मनसः, सर्व्वेन्द्रियाणामुद्योतकः, सर्व्वेन्द्रियार्थानामभिवोढे"त्यादि ( च. सू. १२ अ. ) ।

सर्व्वांसाञ्चासां विस्तरं यथास्थानं वक्ष्यामः ।

[ **स्रोतांसीति**—तु शरीरमार्गाणां साधारणी संज्ञा । तथाहि चरकः—"स्रोतांसि खलु परिणाममापद्यमानानां धातूनामभिवाहीनि भवन्त्ययनार्थे" इति ( च. वि. ५ अ. ) । ]

**धातवो नाम**—प्रीणन-जीवन-चालन-स्नेहन-धारण-गर्भोत्पादनादिकराणि शरीरोपादानानि । ते सप्तसंख्याः । "रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः" इति । तत्र—

**रसो नाम**—चतुर्विधस्य षड्रसस्य द्विविधवीर्य्यस्याहारस्य सम्यक्परिणतस्य तेजोभूतः सारः सौम्यः । "रस गतौ धातुरहरहर्गच्छतीति रसः ।"[1] स खल्वाप्यो रसो भुक्तमार्गस्थैरतिसूक्ष्मैः स्रोतोभिराकृष्यमाणो यकृत्प्लीहानौ प्राप्य पाकरागावुपैति रक्तसंज्ञाञ्चानन्तरं लभते । भवति चात्र—

"रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् ।
अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥" ( सु. सू. १४ अ. )

**रक्तं नाम**—सकलधातुप्रीणनः सारः शरीरस्य रस एव रञ्जकाख्येन पित्तेन तथा विपरिणमितः । तस्य च संग्रहणप्रेरणस्थानं[2] हृदयम्, तद्धि हृदयादेव धमनीरनुप्रविश्य कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति जीवयति यापयति च । मलिनीभूतञ्च तत् शरीरप्रचारात्, सिराभिः प्रविशति हृदयमेव पुनः शुद्ध्यर्थं फुस्फुसगमनाय ।

[ **लसीका**[3] **तु**—शोणितस्यैव तन्वच्छजलभागो रसायनीषु प्रचरिष्णुः सर्व्वधातुपोषणः । तस्याः शोणित एव रस एव वाऽन्तर्भावः । ]

**मांसं नाम**—पेशीनामुपादानधातुर्मृदुलोहिततन्तुमयो जलौकाशरीरवत् सङ्कोचप्रसरणशीलः ।

---

१ "रसवहानां स्रोतसां हृदयं मूलम्" ( च. वि. ६ अ. ) तेन विधम्यते रसात्मकमोजः ( शुद्धशोणितं ) सर्व्वत्र शरीरे । यथाह चरकः—"तेन मूलेन महता महामूला मता दश । ओजोवहाः शरीरेऽस्मिन् विधम्यन्ते समन्ततः ।" ( च. सू. १६ अ. ) अत्र ओजः रसात्मकमोज इति व्याख्येयम् । वाग्भटेनाप्युक्तं—"दशमूलसिराहृत्स्थास्ताः सर्वं सर्वतो वपुः । रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम्" ( अष्टाङ्ग ह. शा. ) । तत्र शरीरप्रचारान्मलिनीभूतं पुनरभिप्रपद्यते हृदयं शुद्ध्यर्थं फुस्फुसगमनाय । तस्मादुच्यते, "अहरहर्गच्छती"ति ।

२ तथाच सुश्रुतः—"तस्य च हृदयं स्थान"मित्यादि । (सु. सू. १४ अ.) चतुःप्रकोष्ठं च हृदयम्, तद्विवरणमग्रे वक्ष्यते । ३ लसीका—Lymph.

**मेदो नाम**—सान्द्रसर्पिस्तुल्यः स्नेहधातुः शरीरस्य । तस्य स्थानमुदरान्तः[1], त्वचामधश्च[2] ।

[ **वसा तु**—मांसान्तरनुप्रविष्टः स्नेहस्तस्या मेदस्यनुप्रवेशस्तुल्योपादानत्वात् । ]

**अस्थीनि नाम**—स्थिरकठिनावलम्बनो धातुः कायस्य यमाश्रित्य समग्रं शरीरमवतिष्ठते । विशेषश्चास्थ्नामनुपदं व्याख्यास्यामः ।

**मज्जा नाम**—अस्थिमध्यगतः स्नेहः । स द्विविधः पीतो रक्तश्च, तत्र पीतो नलकास्थ्नामन्तः, रक्तस्त्वितरास्थिषु प्रान्तभागेषु च नलकास्थ्नाम् । सोऽयं स्थूलस्वरूपेण मेदसोऽभिन्नोऽपि कर्म्मविशेषात् पृथगेव धातुः ।

**शुक्रं नाम**—प्रजाजननार्थश्चरमो धातुः । तस्य प्रभवस्थानं मुष्कौ[3] । स्रोतसी चास्य द्वे मूत्रमार्गप्रतिबद्धे । तत् खल्वव्याकृतं "स्फाटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि" चाहुः । त एते रसादिशुक्रान्ता धातवः ।

**आशया[4] नाम**—श्वसनान्नविपचनशोणितसंवहनादिक्रियाकरा बहवः । तेषां तिसृषु गुहास्ववस्थानम् । तास्तु यथा—शिरोगुहा, उरोगुहा, उदरगुहा चेति । [ दृश्यतां पुरश्चित्रम् ( ग्रन्थारम्भे ) ] तत्र—

**शिरोगुहायां**—मस्तिष्कमनुमस्तिष्कं सुषुम्नाशीर्षकञ्च[5] । तदेतत्त्रयं निखिलसंज्ञाचेष्टामूलं, येन संबध्यते निम्नतः सुषुम्नाकाण्डः पृष्ठवंशान्तरस्थः । सेयं प्रथमा शिरोगुहा व्याख्याता भवति ।

**उरोगुहायां**—फुस्फुसद्वयं[6] हृदयञ्च[7] प्रधानम् । तत्र श्वसनार्थौ फुस्फुसौ श्वासपथेन कण्ठाभिगतेनोरसि द्वेधाविभक्तेन प्रतिबद्धौ । शोणितसंग्रहणप्रेरणार्थकं हृदयं पुण्डरीकाकारं फुस्फुसयोरन्तरालस्थं, तत्र प्रतिबद्धं महासिराद्वयं महाधमनीमूलं, फुस्फुसीयामहासिरा धमन्यश्च यथास्थानं वक्ष्यमाणाः—इति द्वितीया उरोगुहा व्याख्याता भवति ।

**उदरगुहायां**—भुक्तमात्रस्याधारो दृतिसमाकार आमाशयः[8] स नाभि-

---

१ उदरच्छदभूतायां वपाख्यस्थूलकलायाम् (In the Omentum) इति भावः । २ मेदोधराख्यकलायां सर्व्वदेहच्छादिन्याम् । ३ "यथा पयसि सर्पिस्तु गूढ़श्चेक्षौ रसो यथा" इत्याद्यभिधानन्तु पुंलक्षणश्मश्र्वादिसम्पादकसर्व्वशरीरचरशुक्रसारपरम् । तद्विवरणमग्रे वक्ष्यते । ४ आशयास्त्रिविधाः सगर्भा अगर्भाः ईषद्गर्भाश्च । तत्र सगर्भाः आमाशयाद्याः । अगर्भा यकृत्प्लीहाद्याः । ईषद्गर्भाः मस्तिष्काद्याः । अगर्भेष्वपि सूक्ष्मसिराधमन्यादिजालकानां बाहुल्यात्, आशेरते दोषधातुमला एष्विति व्युत्पत्त्याऽऽशयपदप्रयोगः । ५ मस्तिष्कम् = Cerebrum (Brain). अनुमस्तिष्कम् = Cerebellum. सुषुम्नाशीर्षकम् = Medulla Oblongata. ६ फुस्फुसद्वयम् = Lungs. ७ हृदयम् = Heart. ८ आमाशयः = Stomach.

ऊर्द्ध्वम्। पच्यमानस्य विपक्वस्य चाशयः अन्त्राणि[1] नाभेरधः परितश्च। तत्र क्षुद्रान्त्राणि पच्यमानाशयः, बृहदन्त्रं तु पक्वाशयो मलाशयो वा। सर्वान्त्राणां वा पक्वाशयसंज्ञेत्यन्ये। पाचकरञ्जकपित्तयोः प्रभवो यकृत्[2], तत्र संलग्नः पित्ताशयः[3]। रञ्जकपित्तप्रभवः प्लीहा[4]। यकृत्प्लीह्नोश्च स्थितिः क्रमेण दक्षिणतो वामतश्चामाशयात्। पृष्ठत आमाशयात् कुठारिकाकारोऽग्न्याशयः[5]। मूत्रप्रभवौ महाशिम्बीबीजाकारौ कोषौ वृक्कौ[6] नाम कटिपार्श्वयोः। वृक्कप्रभवस्य मूत्रस्य मूत्रस्रोतोभ्या[7] समागतस्याशयो वस्तिर्नाम स नाभेरधः। योनेरूर्द्ध्वमुखप्रतिबद्धः क्षुद्रकलसाकारो गर्भाशयः[8], स स्त्रिया एव। सोऽयं स्वमुष्टिमात्राकारोऽगृहीतगर्भायाः, गृहीतगर्भायास्तु यथागर्भमभिवर्द्धते। तस्य चोभयोः पार्श्वयोः बीजकोषौ[9] नाम, तौ बीजस्रोतोभ्यां[10] प्रतिबद्धौ गर्भाशयेन—ताविव तु पुरुषस्य बहिःस्थितौ मुष्कौ[11] नाम शुक्रप्रभवौ। सेयं तृतीया उदरगुहा व्याख्याता भवति।

ता एतास्तिस्रो गुहा यासु निखिलाशयावरोधः।

**पञ्च ज्ञानेन्द्रियाधिष्ठानानि**—श्रोत्रत्वङ्नेत्ररसनाघ्राणाख्यानि। तत्र—

**श्रोत्रे** द्वे श्रवणेन्द्रियाधिष्ठाने। तदवयवास्तु—कर्णशष्कुल्यौ[12] कर्णकुहरे[13] श्रुतिपटहादीनि[14] चेति। तेषां विस्तरो यथास्थानम्।

**त्वचो**—व्याख्याताः। ताः स्पर्शेन्द्रियाधिष्ठानम्।

**नेत्रे**—द्वे दर्शनाय। तत्र प्रतिनेत्रमवयवास्तु—सपक्ष्मणी नेत्रपुटे, नेत्रवर्त्मनी, अक्षिगोलके चेति। अक्षिगोलकान्तर्गतविशेषांस्तु यथास्थानं वक्ष्यामः।

**रसना**—त्वेका पेशीमयी, तत्र स्वादग्राहिनाड्याः प्रतानमुखानि स्वादाङ्कुरेषु प्रतिबद्धानि। वागयन्त्रोपकरणं च रसना। तत्र हि वाग्वाहिनाड्या अपि प्रताना रसनापेशीषु प्रतिबद्धाः।

**घ्राणे**—द्वे अस्थिप्राचीरकेण द्विभागविभक्ते। तदवयवास्तु—घ्राणपुटे, घ्राणविवरे, घ्राणकला, घ्राणपथश्च त्रिभूमिविभक्तः। घ्राणकलायाश्च गन्धग्राहिनाड्याः प्रतानाः।

---

१ अन्त्राणि = Intestines (इण्टेस्टिन्स्)। क्षुद्रान्त्राणि पच्यमानाशयः = Small Intestines. बृहदन्त्रं तु पक्वाशयो मलाशयो वा = Colon (कोलन्)। २ यकृत् = Liver (लिभर्)। ३ पित्ताशयः—Gall-Bladder (गल् ब्लाडर्)। ४ प्लीहा = Spleen (स्प्लीन्)। ५ सर्वाहारजरणक्षमस्य रसस्याग्निस्वरूपस्य धारणादग्न्याशयः = Pancreas. सोऽयं क्लोमेत्यपरे। तच्चिन्त्यम्, हृद्यतासुपोद्वातः। ६ वृक्कौ = Kidneys. यत्तु "वृक्कौ पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदस" इति, तत् सन्दिग्धार्थं प्रतिभाति, प्रत्यक्षविरोधात्। ७ मूत्रस्रोतसी वृक्काभ्यामधोमुखे वस्तिमभिप्रपन्ने = Ureters. वस्तिः = Bladder. ८ गर्भाशयः = Uterus. ९ बीजकोषौ = Ovaries. १० बीजस्रोतसी = Fallopian Tubes. ११ मुष्कौ = Testicles. १२ कर्णशष्कुल्यौ = Pinnæ of the Ears. १३ कर्णकुहरम् = External Auditory Meatus. १४ श्रुतिपटहम् = Tympanum. आदिपदात् श्रुतिशम्बूकादीनि यथास्थानं वक्ष्यमाणानि।

**पञ्च कर्म्मेन्द्रियाधिष्ठानानि**—तानि वाक्पाणिपादपायूपस्थसंज्ञानि। तत्र—

**वागिन्द्रियाधिष्ठानम्**— जिह्वासमवेतस्वरयन्त्रः कण्ठस्थः। वाचो हि कण्ठघोषेण नानाविधजिह्वापरिवृत्तिपरिणमितेनाभिनिष्पाद्यन्ते।

**पाणिपादम्** —ग्रहण-धारण-स्थान-चलनादिसहायमित्युक्तपूर्व्वम्।

**पायुर्नाम** — मलविक्षेपकर्म्मा बृहदन्त्रस्य प्रान्तभागो गुदसंज्ञः।

**उपस्थो नाम**—जननेन्द्रियम्,—पुरुषस्य शिश्नः, स्त्रियास्तु योनिरिति।

**नव द्वाराणि**—चक्षुषी, श्रोत्रे, नासाविवरे, मुखं, पायुर्मूत्रमार्गश्चेति। स्त्रियास्तु त्रीण्यधिकानि—स्तनावपत्यपथश्चेति।

[“**मर्म्माणि नाम** मांससिरास्नायुस्थिसन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति। तस्मान्मर्म्मस्वभिहतास्तांस्तान् भावानापद्यन्ते। तान्येतानि पञ्चविकल्पानि मर्म्माणि। तद्यथा—सद्यःप्राणहराणि कालान्तरप्राणहराणि विशल्यघ्नानि वैकल्यकराणि रुजाकराणि चेति”। सप्तोत्तरञ्च मर्म्मशतमत्र काये। तद्विवरणमाकरे[1] द्रष्टव्यम्)।

अथेदानीं प्रत्यङ्गावयवविशेषान् ब्रूमः।

ललाटं, भ्रुवौ, शङ्खौ, गण्डौ, ऊर्द्ध्वहनुमण्डलम्, अधोहनुमण्डलम्, ओष्ठाधरौ, चिवुकं, शिरोधरा चेति **शीरोग्रीवोपाङ्गानि** स्पष्टार्थानि।

स्तनौ, वक्षः, पार्श्वौ, पृष्ठम्, उदरं, नाभिः, वस्तिदेशः, कटिः, त्रिकञ्चेति[2] **मध्योपाङ्गानि** प्रसिद्धार्थानि।

**शाखोपाङ्गानि तु**—अंसः कक्षा प्रगण्डः कफोणिः प्रकोष्ठो मणिबन्धः पाणितलं पाणिपृष्ठमङ्गुलयश्चेति प्रतिबाहु उपाङ्गानि। तत्रांसो भुजशिरः। भुजवक्षसोः सन्धिः कक्षा। अंसात् कफोणिं यावत् प्रगण्डः। बाहुमध्यसन्धेः पृष्ठभागः कफोणिः स एव कूर्परोऽपि। कफोणेरधस्तोर्द्ध्वं मणिबन्धात् प्रकोष्ठः। करप्रकोष्ठयोः सन्धिर्मणिबन्धः। (मणिबन्धादाकनिष्ठं करबहिर्भागः करभः)। अधो मणिबन्धात् पाणिः करापरपर्य्यायः। पाणेः सम्मुखो रेखाङ्कितो भागः पाणितलम्, तद्विपरीतं पाणिपृष्ठम्। अङ्गुष्ठतर्ज्जनीमध्यमानामिकाकनिष्ठाख्याः पञ्च कराङ्गुलयः।

१ यथा सुश्रुतशारीरषष्ठाध्याये। न च भ्रमितव्यं मर्म्मस्वभिहतेषु मृत्युरेव भवति नियमेनेति।

२ त्रिकं नाम पृष्ठवंशस्याधरोभागो यत्र सन्धीयेते श्रोणिफलके उभयतः।

जघनं वंक्षण ऊरुर्जानु जङ्घा गुल्फौ पादसन्धिः पार्ष्णिः पादतलं प्रपदं पादपृष्ठमङ्गुलयश्चेति प्रतिसक्थि उपाङ्गानि। तत्र जघनं नाम श्रोणिपार्श्वं सक्थिशिरःस्थम्। मध्यकायसक्थ्नोः सन्धिर्वंक्षणः। वंक्षणजानुनोर्मध्यमूरुः। ऊरुजङ्घयोः सन्धिर्जानु। जानुनोऽधस्तात् जङ्घा। जङ्घाया अधोभागे उभयतः गुल्फौ। तदधस्तात् पादसन्धिर्गुल्फसन्धिर्वा। तदधः पादः। तदवयवास्तु पादपश्चिमो भागः पार्ष्णिः, पादाग्रं प्रपदं, रेखाङ्कितो भागः पादतलम्, तद्विपरीतं पादपृष्ठम्. पादाङ्गुलयश्च पञ्च कराङ्गुलिवदेव नाम्नेति।

सा खल्वियं शारीरपरिभाषा या सम्यगवगता निखिलमपि शारीरतत्त्वमग्रे वक्ष्यमाणमवबोधयिष्यति।

तथाचाहुः—

"अव्यक्तानुक्तलेशोक्तसन्दिग्धार्थप्रकाशिकाः।
परिभाषाः प्रकथ्यन्ते दीपीभूताः सुनिश्चिताः॥
"शरीरसंख्यां यो वेद सर्वावयवशो भिषक्।
तदज्ञाननिमित्तेन मोहेन स न युज्यते॥" ( च. शा. ८ अ. )

---

## तृतीयोऽध्यायः।

अथातः अस्थिसामान्यवर्णनीयमध्यायं व्याख्यास्यामः।

**अस्थीनि नाम**—स्थिरकठिनावलम्बनधातुः शरीरस्येत्युक्तं प्राक्। तानि प्रथमतः परिज्ञेयानि, तेषां प्रधानालम्बनत्वात् कायस्य। तथाह्युक्तम्—

"अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः।
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम्॥
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम्।
अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम्॥" (सु. शा. ५ अ)

तान्युपादानद्वितयसंयोगादभिनिष्पद्यन्ते। उपादानद्वितयञ्च—कोमलः स्नायुसंघातभागः, कठिनः सुधा[1]भागश्चेति। कोमलस्नायुतन्तुजालकेषु कठिनसुधांशसंयोगा[2]द्धि सर्वास्थ्नामभिसम्भवः।

---

१ सुधा चूर्णकम् (Lime)। २ शणसूत्रवद्दृढसूक्ष्मतन्तुजालकेषु कठिनचूर्णवद्वस्तुसङ्घातेनास्थ्नां निर्म्माणमित्यर्थः।

अथास्थ्नां द्विरूपमावरणम्—बाह्यमाभ्यन्तरञ्च । तत्र या बहिरावृणोत्यस्थीनि, सा अस्थिधरा नाम कला जीवभूमिरस्थ्नाम्[1] । यात्वन्तरावृणोत्यस्थिविवराणि अन्तर्वेष्टनीभूय, सा मज्जधरा नाम स्वनामव्याख्याता ।

द्विविधश्चास्थ्नामुपादानसङ्घातविशेषः—घनसङ्घातः शुषिरसङ्घातश्चेति[2] । तत्र घनसङ्घात. सर्वास्थ्नां बहिर्भागेषु, विशेषतश्च नलकास्थ्नाम् । शुषिरसङ्घातः क्षुद्रास्थ्नां कपालास्थ्नाञ्चाभ्यन्तरतः[3], प्रान्तेषु[4] च नलकास्थ्नाम् ।

एष पुनरस्थ्नां पोषणप्रकारः । धमन्यः सर्वास्थिषु स्फुटानि[5] विवराण्या[6]श्रित्य प्रविशन्ति, प्रसरन्ति चानेकधा सूक्ष्मानुसूक्ष्मैः प्रतानैः—एवं पोषणार्थं शुद्धरक्तागमः । सिराश्च तैरेव विवरैरविशुद्धरक्तं बहिर्नयन्ति[7]—एवमविशुद्धरक्तविसर्गः ।

अथैषां सर्वेषामेवास्थ्नां बाल्ये तारुण्यं[8] संख्याबाहुल्यञ्च ; वयःपरिणामेन कठिनीभावः संख्याल्पत्वञ्च परस्परसंयोगेनापञ्चविंशवर्षात्[9] । श्वासपथादिगतानान्तु नियतमेव तारुण्यमन्यत्र वार्द्धकात् । वार्द्धके तु नियततरुणानामपि केषाञ्चित् काठिन्यसम्भवः, कठिनानाञ्च भङ्गुरत्वम् ; तेन दुर्लभं तदानीं भग्नास्थ्नां सम्यक् प्रतिसन्धानम् ।

कठिनीभावश्च तरुणास्थ्नां तन्मध्यवर्त्तिनः केन्द्रविशेषानभितः प्रसर्पति । तानस्थिकेन्द्रानाचक्षते । तत्र नलकास्थ्नां प्रान्तभागाः प्रायेण पृथक् केन्द्रेभ्यः प्रवर्द्धन्ते तां स्तथा प्रवर्द्धमानान् "प्रान्तास्थि" संज्ञया निर्द्दिशयामः । दृश्यते च प्रान्तास्थ्नां प्रायो मध्यनलकाद् विश्लेषो शिशूनां सन्धिविश्लेषे ।

आकृतितः पुनः पञ्चविधान्याहुरस्थीनि प्राञ्चः । तानि—"कपालरुचकतरुणवलयनलकसंज्ञानि ।" तत्र कपालाकृतीनि कपालानि यथा शिरसि । दशनास्तु रुचकानि[10] । घ्राणकर्णादिषु तरुणानि । पार्श्वपृष्ठोरःसु वलयानि[11] । शाखासु नलकानि ।

इतराण्यपि सन्ति क्षुद्रकठिनान्यस्थीनि येषां नैतेष्वन्तर्भावः सुकरः । तानि विषमाणि[12] नाम यथा—पाणिपादकूर्च्चास्थीनि ।

---

१ सेयं कला (Periosteum) चेदभिहन्यते, तदा तदावृतमस्थ्यपि शीर्य्यते, अतएवेयं जीवभूमिरस्थ्नाम् । २ सुधांशाधिक्ये सति घनसङ्घातः, स्नाय्वंशाधिक्ये शुषिरसङ्घातः (Compact tissue and Cancellous tissue). ३ कपालास्थ्नामपि बहिरावरणफलकद्वयं घनसङ्घातमयमेव । ४ नलकास्थ्नामेकैकस्य द्वावन्तौ, तौ चान्तः शुषिरसङ्घातौ । ५ परिदृश्यमानानि । ६ Nutrient Foramina. ७ हृदयाभिमुखं नयन्तीति भावः । ८ कोमलत्वम् । तरुणास्थीनि हि कोमलास्थीनि । ९ बहवः स्वल्पास्थ्यवयवाः पौढ़ावस्थारम्भे परस्परं संयुज्यन्ते । १० रुचकानि, रुचकाकारत्वात् । रुचकं नाम कङ्कतिका ( कंकही, चिरुणीति भाषा ) । ११ वलयप्रायाकारत्वात् । १२ विषमाकारत्वात् ।

# प्रथमं चित्रम्।

## नरकङ्कालम् ( सम्मुखतो दृष्टम् )।



संख्यातस्तु त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो[1] भाषन्ते। त्रीणि शतानि शल्यतन्त्रविदः[2]। द्वे शते प्रतीच्याः[3]। आपातविरुद्धवादिनोऽपि सर्व एवैतेऽवितथमाहुः। गणनाप्रकारभेदात्। तथाहि वेदवादिनो नखदन्तादीन्यस्थिगणनायामन्तर्भावयन्ति नैवमितरे। तरुणास्थीनि दशनांश्च गणयन्ति शल्यतन्त्रविदः प्राच्याः, नैवं प्रतीच्याः। पृथग्वयोग्रहणाच्च। प्राच्यो हि यौवन प्रविष्टस्य[4] सञ्चक्षतेऽस्थीनि, प्रौढ़स्य तु प्रतीच्याः। ये खलु तावदस्थ्यवयवाः पृथक् सन्ति यूनस्त एव एकीभूय बहुधा सम्पूर्णास्थीनि स्वल्पसंख्यानि निष्पद्यन्ते प्रौढ़स्येति हि संख्याभेदः।

इह तु प्रौढ़काये प्रत्यक्षदृष्टानि कठिनास्थीन्येव संचक्ष्महे—गणना सौकर्य्याल्लाघवाच्च। तरुणास्थिनखदशनानान्तु नेह ग्रहणम्। तरुणास्थ्नामसंख्येयप्रायत्वात्। नखदशनानाञ्च त्वग्विपरिणाममात्रत्वात्[5]। एवञ्चेह कठिनास्थीनि चतुर्विधान्येव,—कपालानि, वलयानि, नलकानि, विषमाणि चेति।

अथैषां सङ्ख्यानम्। तत्र—

**शाखाऽस्थीनि**—यथा [ दृश्यतां कङ्कालचित्रद्वयम् ]—एकैकस्यां पादाङ्गुल्यां त्रीणि त्रीणि, द्वे अङ्गुष्ठे इति चतुर्दश[6] अङ्गुलीषु। पञ्चानामङ्गुलीनां मूलतः शलाकाः[7] पञ्च। तन्मूले पादकूर्च्चास्थीनि[8] सप्त। जङ्घायां[9] द्वे। जानुन्येकम्[10]। एकमूर्विति[11]। त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति। तथा द्वितीये। बाह्वौ तु अङ्गुलीषु चतुर्दश। शलाकाश्च[12] पञ्च पूर्व्ववत्। पाणिकूर्च्चास्थीनि[13] अष्टौ। प्रकोष्ठे[14]

---

१ चरकयाज्ञवल्क्यादयः। २ सुश्रुतभेलाद्याः। ३ यूरोपीयाः। ४ कशेरुकावयवादीनां पृथक्संख्यानात् स्फुटमनुमीयते खल्वेतत्। चरक-सुश्रुत-नव्यमतानां संख्यानादितुलना तु परिशिष्टप्रकरणे दर्शयिष्यते। ५ त्वच एव विपरिणामेन निष्पद्यन्ते नखा दशनाश्च शैशवे। तेषामस्थिषु गणनं वेदवादिनामेव युज्यते, दशनादीनामपि गङ्गाजलादौ निःक्षेपे अस्थिफलस्वीकारात्। ६ यत्तु सुश्रुते "एकैकस्यां पादाङ्गुल्यां त्रीणि त्रीणीति पञ्चदश"—इति तत् कस्यचित् प्रमादजन्यं प्रत्यक्षविरोधात् स्वोक्तिविरोधाच्च। तथा हि सन्धिगणनायां "एकैकस्यां पादाङ्गुल्यां त्रीणि त्रीणि द्वे अङ्गुष्ठे" इति अङ्गुलीसन्धीनां चतुर्दशैव संख्या निर्द्दिष्टा (सु. शा. ५ अ.)। अङ्गुल्यस्थीनि = Phalanges. ७ पादाङ्गुलिशलाकाः = Metatarsals. ८ पादकूर्चास्थीनि = Tarsal Bones. ९ जङ्घास्थिनी = (Leg Bones) Tibia aud Fibula. १० जान्वस्थि = Patella. ११ ऊर्व्वस्थि = Femur. १२ कराङ्गुलिशलाकाः = Metacarpals. १३ पाणिकूर्चास्थीनि = Carpal Bones. १४ प्रकोष्ठास्थिनी = Radius and Ulna.

द्वे । प्रगण्डे[1] एकम् । त्रिंशदेवमेकस्मिन् बाहौ भवन्ति । तथा द्वितीये । एवं शाखासु सविंशमस्थिशतं द्रष्टव्यम् ।

**अथ मध्यशरीरे अस्थीनि**—तत्र मध्यालम्बनभूते पृष्ठवंशे कण्ठादारभ्य कटिं यावत् चतुर्विंशतिः कशेरुकाः[2] । तदनुबन्धेन त्रिकसंस्थमेकं त्रिकास्थि[3] नाम (तदस्थिपञ्चकसङ्घातमयम्) । तदनुबन्धेन च गुदपश्चिममेकमनुत्रिकं[4] नाम (तदपि तथैव) । श्रोण्योर्द्वे कपालास्थिनी[5] श्रोणिफलके नाम । उरसि पुरो मध्यफलकमेकम्[6] उरःफलकं नाम (तदस्थित्रयसंयोगजम्, अस्थिषट्कसंयोगजं वा) । अक्षके[7] द्वे तदुभयतः । अंसफलके[8] द्वे अंसपृष्ठतः । पार्श्वयोरेकैकस्मिन् द्वादशेति चतुर्व्विंशतिः पर्शुकाः[9] । ग्रीवायां पुरो रसनामूलगमेकमर्द्धवलयाकारं कण्ठिकास्थि[10] नाम । एवमष्टपञ्चाशदस्थीनि मध्यकाये भवन्ति ।

**अथ शिरसि**—चत्वारि शिरःकपालानि, पुरःकपालम्[11] पश्चात्कपालं[12], पार्श्वकपाले[13] द्वे चेति । शङ्खयोर्द्वे[14] शङ्खास्थिनी नाम । द्वे शिरोभूमिभूते—तयोरेकं जतूकाकारं[15] कण्ठताल्वादिच्छादनं जतूकास्थि नाम, अपरं झर्झराख्यं[16] लघुशुषिरं नासामूलगम् । द्वे गण्डयोः[17] । द्वे ऊर्द्धहन्वौ[18] । एकमधोहन्वौ[19] । द्वे ताल्वस्थिनी[20] । द्वे नासामूलतः पार्श्वयोः नासास्थिनी[21] नाम । द्वे नासाभ्यन्तरतः[22] शुक्तिके नाम । एकं नासामध्यप्राचीरभूतं[23] सीरिकाख्यम् । द्वे अक्षिकोटरपार्श्वयोरश्रुमार्गाश्रये अश्रुपोठे[24] नाम । त्रीणि सूक्ष्मास्थीनि[25] प्रतिकर्णमभ्यन्तरत इति कर्णयोः षट्, तानि श्रुतियन्त्रोपकरणानि । एवमष्टाविंशतिरस्थ्नां शिरसि ।

तदिदं समुदायेन षड़धिकं शतद्वयं कठिनास्थ्नामवगन्तव्यम्, शतद्वयं वा कर्णास्थिवर्जम् ।

केषुचित् कण्डरान्तेष्वपि प्रायश्चणकाकाराणि दृश्यन्ते क्षुद्रास्थीनि[26] । नेह तेषां पृथक् संख्या, अनिश्चितावस्थानात् ।

तरुणास्थ्नां[27] च नेह गणनेति प्रागवोचाम, दिग्दर्शनार्थन्तु कानिचिद्

---

१ प्रगण्डास्थि = Humerus. २ Vertebrae. ३ Sacrum. ४ Coccyx. ५ Os Innominatum (Hip-bone). ६ Sternum. ७ Clavicles. ८ Scapulæ. ९ Ribs. १० Hyoid. ११ Frontal. १२ Occipital. १३ Parietal. १४ Temporal. १५ जतूका चर्म्मचटिका (चामचिकि इति वङ्गभाषा) । जतूकास्थि = Sphenoid. १६ Ethmoid. १७ Malar Bones. १८ Superior Maxillary. १९ Inferior Maxillary. २० Palate Bones. २१ Nasal Bones. २२ Inferior Turbinated. २३ Vomer. २४ Lachrymal Bones. २२ Ossicles of the Ear. २६ कण्डराचणकास्थीनि = Sesamoid Bones. २७ तरुणास्थि = Cartilage.

# द्वितीयं चित्रम् ।

## नरकङ्कालम् ( पार्श्वतो दृष्टम् ।)



निर्द्दिंश्यन्ते । तानि यथा पृष्ठवंशे, कशेरुकान्तरालेषु, सन्ध्यन्तरालेषु, पर्श्वकान्तेषु, नासाप्राचीरयोः, कर्णपाल्योः, श्वासपथे, तच्छाखाप्रशाखासु चेति । तानि सन्ध्यादिप्रसङ्गे वर्णयिष्यन्ते ।

दशनास्तु द्वात्रिंशत् । तेषु चतुर्णां पश्चिमानां यौवने समुद्भेदः कदाचिच्चिरेण वा । त्वग्विपरिणाममात्रत्वाद्दशनानामिह नास्थित्वमित्युक्तपूर्वम् ।

सोऽयं सर्वास्थिप्रविभागः संक्षेपेण व्याख्यातः । विशेषोऽत ऊर्द्ध्वम् ।

---

# चतुर्थोऽध्यायः ।

## अथातोऽस्थिविशेषवर्णनीयाध्यायं व्याख्यास्यामः ।

इह खलु सामान्यतः परिज्ञानेऽप्यस्थ्नां विशेषा अवश्यं ज्ञातव्या भवन्ति सूक्ष्मप्रतिपत्तये पेशीक्रियाविज्ञानार्थं[1] भग्नादिप्रतिसन्धानार्थञ्च[2] । तानेवेदानीं विशेषान् प्रविभज्य समाचक्ष्महे ।

आदौ चेह तावत् पुरुषस्योत्तानकरयुगलस्यालम्बितहस्तपादस्य ग्रहणम् । तदपेक्षया च ऊर्द्ध्वोऽधः-पुरः-पश्चादिति व्यवहारः सर्व्वावयवेषु । तस्य च नाभेरनुक्रमेण कल्पते ऊर्द्ध्वाधोगामिनी रेखा—सेयं **मध्यरेखा** नाम । तस्याः सन्निकृष्टा सीमा—**अन्तःसीमा,** विप्रकृष्टातु **वहिःसीमा** नाम ।

अथ प्रथमः

### शाखास्थिविज्ञानीयः परिच्छेदः ।

तत्र ग्रहणधारणस्थूपनचलनादिसहायाः शाखाश्चतस्रो—द्वौ बाहू द्वे च सक्थिनी । तत्र प्रतिसक्थि त्रिंशदस्थीनि । तद्यथा—पादाङ्गुलीषु चतुर्द्दश, पादमध्ये मूलशलाकाः पञ्च, पादमूले पादकूर्च्चास्थीनि सप्तेति प्रतिपादं षड्-विंशतिः, जङ्घयोर्द्वे, जानुन्येकमेकमूराविति ।

---

१ पेश्यो हि प्रायेणास्थिनिबद्धाः प्रान्तभागैरित्युक्तपूर्व्वं, पेशीक्रियाश्च करचरणादिसञ्चालनानेकविशेषरूपाः, अस्थिसन्निवेशविशेषतश्च पेशीनां क्रियाविशेषाः । ते तु पेश्यध्याये वक्तव्याः । २ पेशीसन्निवेशज्ञानादस्थिविशेषज्ञानाच्च विना भग्नास्थ्नां यथायथं सन्निवेशनं दुष्करमिति भावः ।

## तद्रादौ पादास्थीनि ब्रूमः ।

[ चतुर्थं चित्रम् ]




चतुर्थचित्र-व्याख्या। १—७ कूर्च्चास्थीनि। पे—इत्यङ्कितेषुस्थानेषु निविशन्ते पेश्यः तद्यथा—पे १, पे २, पे ३, पे ४—पादपृष्ठान्तराला:। पे ५—पादाङ्गुलिप्रसारणी दीर्घा:। पे ६—पादाङ्गुलिप्रसारणी दीर्घा, पे ७ पे १०—पादाङ्गुलिप्रसारणी ह्रस्वा (प्रान्तद्वयम्) पे ८ पे ९ पादविवर्त्तन्यौ पेश्यौ। पे ११, पिण्डिकाकण्डरा।

## पादाङ्गुल्यस्थीनि—

एकैकस्यां पादाङ्गुल्यां त्रीणि त्रीणि[1] द्वे अङ्गुष्ठे; तान्यङ्गुलीनलकानि नाम प्रतिपादं चतुर्द्दश। तानि तिसृषु श्रेणीषु विभक्तानि। तत्र अग्रिमश्रेण्यां पञ्च, मध्यमश्रेण्यां चत्वारि[2], पश्चिमश्रेण्यां पञ्च। तेष्व-ग्रिमाणि पञ्च पुरतो मुक्तवितताग्राणि नखधारणाय; सन्धीयन्ते चैतानि पश्चिमतोऽङ्गुलीनलकै-र्मध्यश्रेणीस्थैरन्यत्राङ्गुष्ठात्, अङ्गुष्ठे तु पश्चिमनलकाग्रेण सन्धिः मध्य-नलकाभावात्। मध्यश्रेणीस्थानि चत्वारि तूभयतः[3] सन्धिमन्ति। पश्चिमश्रेणीस्थानि पञ्च, तान्यप्येवम्[4]

## पादाङ्गुलीमूलशलाकाः—

अङ्गुलीनां मूलतः प्रतिपादं पञ्च नलकास्थीनि पादाङ्गुलीमूल-शलाका[5] नाम, तैरालम्ब्यते प्रपदम्। मूलतश्च तानि यथायथं कूर्च्चा-स्थिभिः सन्धीयन्ते, अग्रतश्च पश्चिमाङ्गुलीनलकैः। (अतएव कूर्च्चास्थ्नां शलाकाधिष्ठानसंज्ञा)

* [ तत्रेमे विशेषाः।

### प्रथमा—अङ्गुष्ठमूल-शलाका नाम सा स्थूलतमा ह्रस्वतमा च पाद-शलाकास्थ्नाम्। तया

१ अङ्गुलीनलकानि = Phalanges. २ अङ्गुष्ठे मध्यश्रेणीस्थनलकाभावात्। ३ पुरोऽग्रिमनलकैः पश्चात् पश्चिमनलकैः। ४ उभयतः सन्धिमन्तीत्यर्थः। सन्धिश्च कनिष्ठाद्यङ्गुलीचतुष्टये पुरो मध्यनलकैरङ्गुष्ठे पुरोऽग्रिमनलकेन, पश्चात्तु पञ्चस्वपि अङ्गुलीमूलशलाकाग्रैः। ५ पादाङ्गुलीमूलशलाकाः = Metatarsals.

* एतच्चिह्नद्वयमध्यस्था अंशाः प्रथमावृत्तौ चेन्न पठ्यन्ते तर्हि सुगमता स्यात्। द्वितीयावृत्तौ तु ते सम्यग् विज्ञेयाः सुखावबोधाय।

निर्मीयते प्रपदस्यान्तःसीमा, सन्धीयते चासौ मूलतः आन्तरकोणकाख्येन कूर्चास्थ्ना। अस्याश्च मुण्डं स्थूलं पादतलप्रदेशे मध्यतः खातद्वयाङ्कितञ्च—अनयोश्च खातयोर्विवर्त्तेते ह्रस्वायाः पादाङ्गुष्ठसङ्कोचन्याख्यपेश्याः[1] कण्डरान्तरीये चणकास्थिनी[2]। सन्धीयते चेदमङ्गुष्ठपश्चिमनलकेन।

द्वितीया—तर्जनीमूलशलाका नाम—सा पादाङ्गुलिशलाकासु दीर्घतमा मूलतश्च त्रिभिः सन्धिलक्ष्मभिरङ्किता[3] कोणकाख्यकूर्चास्थित्रयेण सन्धिसूचकैः। मुण्डञ्चास्याः संधीयते तर्जनीपश्चिमनलकमूलेन।

तृतीया—मध्यमामूलशलाका नाम—तस्या मुण्डं मध्यमाङ्गुलीपश्चिमनलकमूलेन संधिमत्, मूलतश्चासौ चतुर्भिः संधिलक्ष्मभिरङ्किता। तेषु आन्तरसीम्नि संधिलक्ष्मद्वयं तर्जनीमूलशलाकापार्श्वेन सन्धिसूचकम्, बाह्यसीम्नि त्वेकं सन्धिलक्ष्म अनामिकामूलशलाकापार्श्वेन सन्धानाय, मध्यतश्चैकं वृहत्तरं बाह्यकोणकाख्येन कूर्चास्थ्ना सन्ध्यर्थम्।

चतुर्थी—अनामिकामूलशलाका नाम—सा मूलतः सन्धीयते घनाख्येन बाह्यकोणकाख्येन चेति द्वाभ्यां कूर्चास्थिभ्यां, तत्रैव बाह्याभ्यन्तरपार्श्वयोश्च यथाक्रमं कनिष्ठातर्ज्जनीमूलशलाकयोर्मूलपार्श्वाभ्याम्।

पञ्चमी—कनिष्ठामूलशलाका—नाम, सा मूलतो वहिःसीम्नि स्थूलार्वुदेनोपलक्षिता। द्वे चास्या मूलतः सन्धिलक्ष्मणी, एकं त्रिकोणं घनाख्येन कूर्चास्थ्ना सन्ध्यर्थमपरमनामिकामूलशलाकापार्श्वेन।] *

तदेवं पञ्च पादाङ्गुलीमूलशलाका व्याख्याताः। तासां नानास्थिभिः सन्धिप्रकारस्मरणार्थमिमे श्लोकाः—

सन्धीयन्ते पादमूलशलाका मुण्डतः पुरः।
अङ्गुलीपश्चिमनलैरथ कूर्चास्थिभिः क्रमात्॥
प्रथमा संहितैकेन द्वितीया संहिता त्रिभिः।
तृतीयैकेन तुर्य्या तु द्वाभ्यामेकेन पञ्चमी॥
अन्योन्यमथ मूले तु सन्धिस्तिसृषु पार्श्वयोः।
एकतस्तु कनिष्ठायामङ्गुष्ठे क्वचिदेव तु[4]॥

---

१ Flexor Hallucis Brevis. २ चणकास्थि—Sesamoid Bone. ३ सन्धिलक्ष्म सन्धेश्चिह्नं मसृणप्रदेशरूपम् ( Facet ). ४ क्वचित् कङ्काले अङ्गुष्ठमूलशलाकापि मूलतस्तर्जनीमूलशलाकया सन्धिमती, नत्वेवं प्राय इत्यर्थः।

**अथ कूर्चास्थीनि**[1]—कूर्चास्थीनि नाम पादपश्चिमभागनिर्मापकाणि स्थूलह्रस्वविषमाणि प्रतिपादं सप्त। तान्येव मूलशलाकाधिष्ठानानि नाम।

तानि क्रमेण कूर्चशिरः—पार्ष्णि—नौनिभ—घन—आन्तरकोणक—मध्यकोणक—बाह्यकोणक—संज्ञानि। तत्र—

**कूर्चशिरो**[2] नाम—(४र्थ चित्रे ७) सर्व्वेषां कूर्चास्थ्नामुपरिस्थितं वृत्तप्रायमस्थि जंघापादयोः संयोजकम्। [अस्य मुण्डं वर्त्तुलाकारं न्युब्जपृष्ठं सन्धिलाञ्छनयुतञ्चोपरिष्टात् जङ्घास्थ्नोऽधःप्रान्तेन सन्ध्यर्थम्। अधःप्रदेशे चास्य गम्भीरा सीता[3] सन्धि-स्नायुरज्जुप्रवेशाय, द्वे च सन्धिलक्ष्मणी पार्ष्णिशिरसा सन्ध्यर्थम्। आन्तरबाह्यसीम्नोस्तु सन्धिलक्ष्मणी गुल्फाभ्यां सन्ध्यानार्थम्। पुरोमुखेऽप्यस्यैकं सन्धिलक्ष्म, तत् नौनिभेन कूर्चास्थ्ना सन्धानार्थम्]।

**पार्ष्णि**[4] नाम—(४र्थ चित्रे ६) वृहत्तमं कूर्चास्थि। तत् पार्ष्णिनिर्मापकं सर्वदेहभारसहञ्च। [अस्योर्द्ध्वप्रदेशे सन्धिलक्ष्मणोर्मध्ये गम्भीरा सीता सन्धिस्नायुरज्जुप्रवेशाय, सन्धिलक्ष्मणी च कूर्चशिरसा सन्ध्यर्थम्। अस्य पुरोमुखं विषमं ह्रस्वञ्च। पश्चाद्भागस्त्वीषद्विषमो दीर्घश्च, स एव पार्ष्णिमूलं निष्पादयति। अस्यान्तरसीम्नि ओष्ठाकारं प्रवर्द्धनकं[5] पार्ष्ण्योष्ठं नाम; तस्योपरि स्फुटं सन्धिलक्ष्म कूर्चशिरसा सन्ध्यर्थम्। अधश्चास्य प्रवर्द्धनकस्य गम्भीरा सीता पादतलस्थ-सिरा-धमनी-नाड़ी-कण्डरामुखानां धारणाय। अष्टौ तु पेश्योऽस्मिन् कूर्चास्थ्नि संयुक्तास्तासु सप्त तलदेशे, एका पुनः पृष्ठतः पिण्डिकाकण्डरा नाम। ता यथास्थानं वर्णयिष्यन्ते।]

**नौनिभं नाम**[6]—(४र्थ चित्रे ५) पादान्तरसीम्नि नावाकारं कूर्चास्थि। [तस्य पुरोभागः ईषत् खातोदरस्त्रिभिः सन्धिलक्ष्मभिरुपलक्षितश्च क्रमेण कोणकाख्यकूर्चास्थित्रयेण (४र्थ चित्रे १, २, ३) सन्ध्यर्थम्। अस्य पश्चिमभागोऽपि खातोदरः कूर्चशिरसो मुखेन सन्ध्यर्थम्। अस्य बहिःसीम्नि क्षुद्रं सन्धिलक्ष्म घनाख्येन कूर्चास्थ्ना सन्धानाय। अन्तःसीम्नि चास्य क्षुद्रमर्बुदम्, तत्र जङ्घानुगाख्यपेशीनिवेशः[7]।]

---

१ कूर्चास्थीनि = Tarsal Bones. २ Astragalus. ३ इह सीता नाम गभीरखातम्। अस्मिन् शास्त्रे सीतादिशब्दाः पारिभाषिकार्थेषु निरूढाः ज्ञेयाः। ४ Calcaneum or Os Calcis. ५ प्रवर्द्धनकं नाम मज्जायोऽस्थ्यवयवः। ६ Navicular. ७ Tibialis Posticus muscle.

एकः पादेन अस्ति ।

दया करने वाली बालिका ने भिक्षुयों को भोजन दिया ।
दयालुः बालिका भिक्षुकेभ्यः भोजनं दत्तवति ।

नदी के किनारे पर बहुत से वृक्ष थे जिनकी डालियों पर चिड़िया गूंज रही थी ।
नद्याः तटे बहूनि वृक्षानि आसन्
डालियोऽपरि विहगाः गूंज अकुर्वन्
बहुत पहले उज्जैन में पुष्पसेन नाम के राजा थे ।
अतीव पुरः उज्जैने पुष्पसेनः नाम्नः राजा आसीत ।
किसी जंगल की कन्दरा में एक सिंह रहता था ।
कश्चित्‌चित जगलस्य कन्दरा: एकः सिंहः निवसत् ।

1963 में

विद्या पर ईस

किसी निर्धनजन को वस्त्र दो
कस्मै निर्धनजनाय वस्त्रं देहि ।
किसी पेड़ पर एक कौआ कबूतर रहते थे ।
कस्मिन्श्चित् वृक्षोपरि एक: कौआ कपोतश्च अधिवसताम् ।
सभी प्राणी जीने की इच्छा करते हैं मरने की इच्छा कोई नहीं करता
वै: प्राणिन: जीवितुम् इच्छन्ति मृत्यु हेतु
मरणं इच्छन्ति ।
बालिकाएं नाचने की इच्छा करती हैं ।
बालिकाएं नर्तितुम् इच्छन्ति ।
गोपाल ने हमें यहां पर भोजन के लिए निमंत्रण दिया ।
गोपाल: वयं अत्र भोजनाय निमन्त्रणं अददात् ।
मैंने कलप्रात: काल एक मनुष्य को देखा जो एक पैर से लंगड़ा था ।
स्व: प्रात: कालं एक: मनुष्यं अपश्यम् यत

...sticus muscle.

**घनं[1] नाम**—( ४र्थ चित्रे ४ ) घनाकारं[2] पादबहिःसीम्नि स्थितं कनिष्ठानामिकामूलशलाकयोरधिष्ठानभूतं कूर्चास्थि । [ अस्य पुरोभागे द्विभागविभक्तं सन्धिलाञ्छनं कनिष्ठानामिकामूलशलाकामूलाभ्यां सन्ध्यर्थम् । अस्य पश्चिमो भागः सन्धीयते पार्ष्णिमुखेन, तदर्थं चात्र स्फुटं सन्धिलक्ष्म । अस्यैवान्तःसीम्नि सन्धिलक्ष्म बहिःकोणकाख्येनकूर्चास्थ्ना सन्धानार्थम् । प्रायशस्तत्रैवाऽपरमपि सन्धिलक्ष्म दृश्यते पश्चिमतः, तत् नौनिभेन सन्ध्यर्थम् । अधःप्रदेशे चास्य स्फुटा सीता दीर्घायाः पादविवर्त्तन्याख्यपेश्याः[3] कण्डरान्तधारणाय । ]

**अन्तःकोणकं[4] नाम**—( ४र्थ चित्रे १ ) अङ्गुष्ठमूलशलाकामूलस्थं कूर्चास्थि त्रिकोणप्रायम् [ अस्य चान्तःसीमा त्वङ्मात्रावरणा, बहिःसीम्नि तु द्वे सन्धिलक्ष्मणी तर्जनी-मूलशलाकामूलेन मध्यकोणकपार्श्वेन च सन्ध्यर्थम् । तस्य पुरोमुखस्थं सन्धिलक्ष्म शिम्बीवीजाकारं अङ्गुष्ठमूलशलाकामूलेन सन्धानाय । अस्य तलदेशे क्षुद्रमर्बुदम् जङ्घा पुरोगा-जङ्घानुगाख्यपेशी-द्वयस्य कण्डरान्तसंयोगाय । ]

**मध्यकोणकं[7] नाम**—( ४र्थ चित्रे २ ) तर्ज्जनीमूलस्थं क्षुद्रतमं कूर्चास्थि त्रिकोणप्रायम् । [ अस्य पुरोभागे सन्धिलक्ष्म तर्ज्जनीमूलशलाकया सन्ध्यर्थम् । पार्श्वयोः सन्धिलक्ष्मणी क्रमेण अन्तःकोणकबहिःकोणकाभ्यां सन्धानाय । पश्चिमतश्च क्षुद्रं सन्धिलक्ष्म नौनिभेन सन्ध्यर्थम् । ]

**बहिःकोणकं[8] नाम**—( ४र्थ चित्रे ३ ) मध्यमामूलशलाकामूलस्थं त्रिकोणप्रायं कूर्चास्थि [ तत् सन्धीयते पुरो मध्यमामूलशलाकामूलेन तर्जन्यनामिकामूलशलाकामूलाभ्याञ्च, तदर्थं चात्र तथा तथा सन्धिलक्ष्माणि । पार्श्वाभ्याञ्चेदं सन्धीयते मध्यकोणकेन घनेन च यदर्थं स्फुटे सन्धिलाञ्छने । पश्चिमतस्तु सन्धिलक्ष्मैकं नौनिभेन सन्धानाय । ]

चरमोक्तानां त्रयाणां कूर्चास्थ्नां कोणकत्रयसंज्ञया निर्देशः ।

तदेवं पादास्थीनि व्याख्यातानि । पादास्थिपृष्ठे पेशीसन्निवेशास्तु चित्राधो व्याख्यायां द्रष्टव्याः, विस्तरः पुनः पेश्यध्याये ।

---

१ Cuboid. २ घनं = कूटम् ( Anvil ). ३ Peroneus Longus muscle. ४ Internal Cuneiform. ५ Tibialis Anticus. ६ Tibialis Posticus. ७ Middle Cuneiform. ८ External Cuneiform.

[ पञ्चम चित्रम्—जंघास्थिनी ]

[ ऊर्द्ध्वम् ]

[ अधः ]

५म चित्रव्याख्या। अत्रैता: निविशन्ते पेश्य:। पे १ दीर्घायामा ( Sartorius ). पे २ पटिका ( Gracilis ). पे ३ कलाकल्पा ( Semimembranosus ). पे४ जंघापुरोगा (Tibialis Anticus). पे ५ द्विशिरस्का ( Biceps ). पे ६ पादाङ्गुली प्रसारणी दीर्घा ( Ext. Longus Digitorum). पे ७ पादविवर्त्तनी दीर्घा, पे ८ सैव ह्रस्वा, पे १० सैव तृतीया ( Peroneus Longus, Brevis and Tertius ). पे ९ पादाङ्गुष्ठप्रसारिणी दीर्घा ( Ext. Hallucis Longus ). ९ इत्यङ्कितेऽवकाशे जङ्घान्तराला कला।

## अथ जङ्घास्थिनी।

जङ्घास्थिनी—तु द्वे, जङ्घास्थि अनुजङ्घास्थि चेति। जान्वस्थि चैकं क्षुद्रकपालाकारं जङ्घास्थ्नोरुपरि जानुसन्धेः पुरस्तात्।

तत्र जङ्घास्थि[1] नाम—( ५म चित्रे ) ऊर्वस्थ्नः परं दीर्घतमं नलकास्थि। तस्य द्वौ प्रान्तौ मध्यनलकञ्चेति त्रयो भागाः।

तस्योर्द्ध्वप्रान्तौ—द्वाभ्यामुत्सेधाभ्यामुपलक्षितः पार्श्वयोः (५म चित्रे १, २), तयोरुपरिष्टात् स्फुटे सन्धिलक्ष्मणी ऊर्वस्थ्नोऽधःप्रान्तस्थिताभ्यां कन्दाभ्याम्[2] सम्बन्धार्थम् ( ५म चित्रे सं सं )। अनयोश्च सन्धिचिह्नयो र्मध्यस्थं ( तत्रैव क ) द्विमुखं कण्टकम्—येन संयुज्यते सन्ध्यन्तरस्थमर्द्धचन्द्राकारं तरुणास्थिद्वयम्[3], यस्य च पुरः पश्चाच्चाश्रीयते सन्ध्यन्तरस्थस्वस्तिकस्नाय्वोः प्रान्तद्वयम्। पुरश्चोर्द्ध्वप्रान्तस्य स्फुटमर्बुदं ( ५म चित्रे ३ ), यत्र संयुज्यते ( ३ अङ्कं परितः) जानुकपालबन्धनी स्नायुः। अस्यैव चोपरि पुरः सन्धिलक्ष्म जान्वस्थ्ना सन्धानाय। पश्चात्तूर्द्ध्वप्रान्तस्य जानुपश्चिमः खातः, तत्र

१ जङ्घास्थि = Tibia. २ कन्दाकाराभ्यामस्थ्यंशाभ्याम्। ३ स्वकीयकोटिचतुष्टयेनेति शेषः।

सन्धीयते पश्चिमाः स्वस्तिकस्नायुः। तस्यैवोर्द्धप्रान्तस्यान्तःसीम्नि पश्चात् लक्ष्यते सीता, तत्राधीयते कलाकल्पा[१]ख्यपेश्याः काण्डरामुखम्। अस्य बाह्यसीम्नि पश्चाद्भागे च सन्धिलक्ष्म क्षुद्रं (५म चित्रे ४) तदनुजङ्घास्थ्नः शिरसा सम्व्यर्थम्।

अधःप्रान्तस्तु जङ्घास्थ्नः—ऊर्द्धप्रान्ताद् ह्रस्वाकारः। अस्य पश्चात् दृश्यते सीता दीर्घाङ्गुष्ठसंकोचन्याः पेश्याः काण्डरान्तसंयोगाय। बहिःसीम्नि चास्य त्रिकोणप्रायं सन्धिलक्ष्म (५म चित्रे ५) अनुजङ्घास्थ्नोऽधःप्रान्तेन सम्व्यर्थम्। अस्य चाधःप्रान्तस्य निम्नप्रदेशे खातोदरं सन्धिलक्ष्म (५म चित्रे ६) कूर्चशिरसा सम्व्यर्थम्। अस्यैव पुनरधःप्रान्तस्यान्तःसीम्नि प्रवर्द्धनकमन्तर्गुल्फभूतम्.तदन्तःस्थञ्च सन्धिलक्ष्म कूर्चशिरसो बहिःसीम्ना सम्व्यर्थम्। अस्य चान्तर्गुल्फ प्रवर्द्धनकस्य पश्चात् दृश्यते सीता जङ्घानुगायाः पादाङ्गुलिसंकोचन्या दीर्घायाश्च पेश्याः काण्डरान्तविवर्त्तनाय। अत्र च प्रवर्द्धनके संयुज्यते गुल्फसन्धिवन्धनो स्नायुः।

मध्यनलकं (काण्डं) तु जङ्घास्थ्नः—ईषद्वक्राकारं बहिःसीम्नि खातोदरञ्च। तिस्रश्चास्मिन् परिस्फुटा धाराः[२], तासां पुरोवर्त्तिनी त्वचोऽधस्तादनुभवनीया। बहिःसीमस्थायां धारायां संयुज्यते अस्थिद्वयमध्यवर्त्तिनो जङ्घान्तरालाख्यो[३] कला (५म चित्रे ८ अङ्कितेऽवकाशे)। पश्चिमायां पुनर्धारायां जङ्घापश्चिमपेशीनां निवेशः।

**अनुजङ्घास्थि** नाम—(५मं चित्रम्) दीर्घयष्ट्याकारं जङ्घास्थ्नोऽनुगतं द्वितीयं जङ्घानिष्पादकमस्थि। अस्यापि द्वौ प्रान्तौ मध्यनलकञ्चेति त्रयो भागाः।

तस्योर्द्धप्रान्तः—जङ्घास्थ्न ऊर्द्धप्रान्तेन सन्धीयते तद्बहिः पश्चिमतः (५म चित्रे ४)। बहिः सीम्नि चास्योत्सेधो (५म चित्रे ८) जानुसन्धिवन्धन्या दीर्घस्नायोः संयोगाय। अस्यैव पश्चिमतश्चूड़ाकारं प्रवर्द्धनकं द्विशिरस्का[४]ख्यपेश्याः, जानुसन्धिवन्धन्या ह्रस्वस्नायोश्च संयोगाय।

अधःप्रान्तस्तु—अनुजङ्घास्थ्नः बहिर्गुल्फनिष्पादकम्। तस्यान्तःप्रदेशस्त्रिकोणेन सन्धिलक्ष्मणाऽङ्कितः कूर्चशिरसा सम्व्यर्थम्। अन्यच्चात्रैव सन्धि

---

१ Semimembranosus. २ Borders. ३ Interosseus Membrane. ४ Biceps Muscle.

लक्ष्म जङ्घास्थ्नोऽधःप्रान्तस्य बहिःपार्श्वेण सन्धानाय। पश्चिमतश्चास्य सीता पाद-विवर्त्तन्याख्यपेशीद्वयस्य कण्डरान्तविवर्त्तनाय। परितश्च प्रान्तं सम्बध्यते बहिःसीमस्था गुल्फसन्धिबन्धनी स्नायुः।

मध्यनलकम्—पुनरनुजङ्घास्थ्नः किञ्चिद्विवृत्तकायं, धारात्रयाङ्कितञ्च। तत्रान्तःसीम्नि या रेखा तस्यां सम्बध्यते जङ्घान्तरालाख्या कला। अत्र संयुज्यन्ते चाष्टौ जङ्घापेश्यः। तद्विस्तरः पेश्यध्याये द्रष्टव्यः।

**जान्वस्थि[1] नाम**—(षष्ठं चित्रम्) वृत्तप्रायं जानोः पुरःस्थं कपालास्थि। तदिदं सक्थिप्रसारणीपेशीनां सम्मिलितायाः कण्डरायाः प्रान्तस्थं बृहदाकारं चणकास्थीति केचित्।

## [ षष्ठ चित्रम् ]




( पश्चिमभागः )  ( पुरोभागः )

अस्य च जान्वस्थ्नः पुरोदेश ईषदुच्चावचः, तत्र संयुज्यते सक्थिप्रसारणीपेशीनां कण्डरा सम्मिलिता (षष्ठचित्रे पे)। पश्चिमप्रदेशस्तु मध्योन्नतः सन्धिलक्ष्मणोपलक्षितश्च (षष्ठचित्रे सं)। ऊर्द्धार्द्धश्च सन्धिलक्ष्मण ऊर्वस्थ्नो निम्नप्रान्तपुरोभागेन सन्घर्षम्, अधोऽर्द्धः पुनर्जङ्घास्थ्न ऊर्द्ध्वप्रान्तपुरोभागेन संधानाय। समन्तात् पुनर्जानुकपालस्य सम्बध्यते जानुसन्धेः पुरश्छादकः स्नायुप्रच्छदः।

---

१ Patella.




**ऊर्व्वस्थि**[1] **नाम**—( ७म चित्रम् ) दृढ़-दीर्घवृहत्तमं शारीरास्थ्नाम् बहुभारसहञ्च। तत् प्रायःसुवृत्तवंशाकारमीषद्वक्रञ्च कङ्काले श्रोणि-पार्श्वाज्जानुसन्धिं यावत् तिर्य्यगभिगतम्। इतर-नलकास्थिवदस्यापि त्रयो भागाः—ऊर्द्धप्रान्तोऽधः प्रान्तो मध्यनलकञ्चेति।

तत्रोर्द्धप्रान्ते लक्षणीयानि - वर्त्तुलप्रायं मुण्डं ( ७म चित्रे १ ), तदधःस्था ग्रीवा ( तत्रैव २ ), तदधःस्थे शिखराकारे प्रवर्द्धनके पश्चान्मुखे—महा-शिखरकं लघुशिखरकञ्च नामतः (तत्रैव ३,४)।

तत्र मुण्डं नाम—( ७म चित्रे १ ) वर्त्तुलार्द्ध-व्यापिना सन्धिलक्ष्मणोपलक्षितम्, विवर्त्तते च तद् वंक्षणसन्धावुदूखलाख्ये। मध्यतो विलयुतञ्च तद् वंक्षणसन्धिमध्यस्थायाः स्नायुरज्ज्वाः प्रवेशाय।

ग्रीवा नाम (७म चित्रे २)--ऊर्वस्थ्न ऊर्द्ध प्रान्त-पार्श्वाद् वक्रं समुद्गतमूर्द्धान्तर्मुखं प्रवर्द्धनकम्। सेयं वयःपरिणामेण क्रमादृजुप्राया भवति भङ्गुरा च। अत्र च दृश्यन्ते अस्थिधमनीद्वाराणि[2] बहुशः।

महाशिखरकन्तु[3] (७म चित्रे ३)—मध्यनलकस्य शिखरभूतं चतुष्कोणकल्पं विषमबहिःपार्श्वं प्रव-र्द्धनकम्। तस्य च विषमपार्श्वैकदेशाश्रयेण विवर्त्तते महती नितम्बपिण्डिकाख्या[4] पेशी श्लेष्मधरकलापुटक-व्यवधानेन। संयुज्यन्ते चात्रैव षड् नितम्बपेश्यः।

**७म चित्रव्याख्या।** १ मुण्डं, २ ग्रीवा, ३ महाशिखरकं, ४ लघुशिखरकम्। ३—४ अङ्कयो-र्मध्यतो रेखा पुरःस्था शिखरान्तराला नाम। ५ महाशिखराग्रस्थं कोटरम्। ६, ७ उपार्व्वुदद्वयम्। सं—जानु-सन्धिलक्ष्म ८, ९—महार्व्वुदद्वयम्। पेशीनिवेशास्तु—पे १ इत्यत्र गुण्डिका, अस्यैवाधः श्रोणिगवाक्षिणी अन्तःस्था यमलाद्वयञ्च। पे २ मध्यमा श्रोणिपिण्डिका। पे ३ ऊरुप्रसारणी अन्तःस्था। पे ४ उरुप्रसारणी मध्यस्था। पे ५ सैव कनिष्ठा पे ६ गरिष्ठा ऊरुव्यूहिनी।

---

१ Femur. २ Nutrient foramina. ३ Trochanter major. ४ Gluteus Maximus ५ Synovial Bursa.

अन्तःसीम्नि पुनर्महाशिखरस्याङ्गुल्यग्रप्रवेशार्हं कोटरम् (७म चित्रे ५), तत्र बहिःस्थायाः श्रोणिगवाक्षिणी[1] पेश्या निवेशः ।

लघुशिखरकं[2] नाम—(७म चित्रे ४) ऊर्वस्थिग्रीवाया अधो मूलतः पश्चिमस्थं ह्रस्वं प्रवर्द्धनकम् । तत्र निविशते (तत्रैव ४ अङ्कं परितः) दीर्घा कटिलम्बिनी[3] नाम पेशी । अधश्चास्य शिखरकस्य श्रोणिपक्षिणी[4] नाम पेशी ।

अनयोश्च शिखरकयोर्मध्ये पुरः पश्चाच्च द्वे रेखे शिखरान्तराले नाम । तयोः सम्बध्येते वंक्षण-सन्धिच्छादनस्य स्नायुकोषस्य पूर्व्वपश्चिमौ भागौ । पश्चिमशिखरान्तराला तु रेखा निम्नतो मध्यनलकं समनुगता, तत्र सम्बध्यते ऊरुचतुरस्रा[5] नाम पेशी ।

मध्यनलकन्तु ऊर्वस्थ्नः—पुरस्तादनुवक्रमुभयोरन्तयोरायतं मध्ये त्रिधार-प्रायञ्च । अस्य पुरोभागादुद्भवति (७म चित्रे पे ४) मध्यस्था ऊरुप्रसारणी[6] नाम-पेशी । मध्यभागे पश्चिमतो दृश्यते प्राकारिका[7] नाम रेखा ऊर्द्ध्वमधश्च द्विधारा । तत्रोर्द्ध्ववर्त्ति यद् धाराद्वयं तत् प्रसरति महाशिखरकं लघुशिखरकञ्च यावत् । अधोवर्त्ति रेखाद्वितयं तावदूर्व्वस्थ्नः अधःप्रान्तस्थाभ्यां महार्वुदाभ्यां सङ्गतम् । अस्या एव चतुर्भुजायाः प्राकारिकाख्यरेखायाः प्रान्तभागेष्वन्तरालेषु च सम्बध्यन्ते निखिला ऊरुपश्चिमस्थाः पेश्यः । तद्विवरणं पेश्यध्याये ।

अधःप्रान्ते—पुनरूर्व्वस्थ्नो लक्षणीयानि—द्वे महार्व्वुदे (कन्दद्वयम्) (७म चित्रे ८, ९), अर्वुदान्तरालं, द्वे उपार्व्वुदे, (तत्रैव ६, ७) चेति ।

तत्र महार्वुदे[8] द्वे कन्दापरपर्य्याये वाह्यमाभ्यन्तरञ्च जानुसन्धिनिर्म्माणाय । तयोः पृष्ठतः कोटरं जानुसन्धिमध्यस्थायाः स्वस्तिकाख्यस्नायोः प्रवेशाय । तत्रैवोर्द्ध्वमुभयतः सम्बध्यते जङ्घापिण्डिकाख्य[9] पेश्याः शीर्षद्वयम् । तन्मध्यतो जानुपृष्ठस्थधमन्याः स्थानम् । वाह्यार्वुदस्य तु पार्श्वतः सम्बध्यते जानुपृष्ठिकाख्या[10] पेशी । अर्वुदयोर्मध्यतः पुरस्त्रिकोणप्रायं सन्धिलक्ष्म (७म चित्रे सं), तदाश्रित्य सन्धीयते जानुकपालम् ।

उपार्वुदे[11] द्वे, तयोः संयुज्येते जानुसन्धिवन्धन्यौ स्नायुरज्जू । तत्रान्तरमुपार्वुदं कलायकाकारेणोत्सेधेनोपलक्षितं तत्र (७म चित्रे पे ६) निविशते गरिष्ठा ऊरुव्यूहिनी[12] नाम पेशी । त्रिंशदेवमेकस्मिन् सक्थ्नि वर्णितान्यस्थीनि । एवमपरेऽपि ।

---

१ Obturator Externus. २ Trochanter minor. ३ Psoas Magnus. ४ Iliacus ५ Qadratus Femoris. ६ Crureus or Vastus Intermidis. ७ Linea Aspera. ८ Condyles. ९ Gastrocnimius. १० Poplitieus. ११ Tuberosities. १२ Adductor Magnus.

# अथ बाह्वस्थीनि ।

अथेदानीं बाह्वस्थीनि व्याख्यास्यामः । तत्र प्रतिबाहु त्रिंशदस्थीनि । तद्यथा—

( अष्टमचित्रम्—पाणि-पुरोभागः । )




कराङ्गुलीषु चतुर्दश, करमध्ये मूलशलाकाः पञ्च, करमूले कूर्चास्थीन्यष्टौ—( इति प्रतिकरं सप्तविंशतिः ), प्रकोष्ठे द्वे, प्रगण्डे चैकमिति । तत्रादौ करास्थीनि । तेषु—

## कराङ्गुल्यस्थीनि—

एकैकस्यां कराङ्गुल्यां त्रीणि त्रीणि द्वे अङ्गुष्ठे; तानि कराङ्गुलीनलकानि[1] नाम प्रतिकरं चतुर्दश । तानि तिसृषु श्रेणीषु विभक्तानि । तत्र अग्रिमश्रेण्यां पञ्च, मध्यमश्रेण्यां चत्वारि[2], पश्चिमश्रेण्यां पञ्च । तेष्वग्रिमाणि पञ्च पुरतो मुक्तविततायाणि नखधारणाय; सन्धीयन्ते चैतानि पश्चिमतोऽङ्गुलीनलकैर्मध्यश्रेणीस्थैरन्य-

**अष्टमचित्र-व्याख्या**—१ नौनिभम् २ अर्द्धचन्द्रम् ३ उपलकं ४ वर्त्तुलकं ५ पर्य्याणकं ६ कूटकं ७ मध्यकूटं ८ फणधरम्—इत्यष्टौ करकूर्चास्थीनि । अथ पेशीनिवेशाः—पे १ पे २ पे ३—इत्यत्र अङ्गुलीसंव्यूहिन्यः पेश्यः । पे ४ अङ्गुलीसंकोचन्यः मध्यपर्व्विकाः । पे ५ अङ्गुलीसंकोचन्यः अग्रपर्विकाः । पे ६ कनिष्ठापकर्षिणी, ह्रस्वा कनिष्ठासंकोचनी च । पे ७ कनिष्ठामूलकर्षिणी । पे ८ अङ्गुष्ठमूलकर्षिणी । पे ९ अङ्गुष्ठसंकोचनी दीर्घा । पे १० अङ्गुष्ठसंकोचनी ह्रस्वा । पे ११ अङ्गुष्ठमूलकर्षिणी । पे १२ पे १३ अङ्गुष्ठापकर्षिणी । पे १४ पे १५ अङ्गुष्ठजापिनी । पे १६ अङ्गुष्ठविस्तारिणी । पे १७ पाणिसंकोचनी अन्तःस्था । पे १८ कनिष्ठापकर्षिणी ।

---

१ अङ्गुलीनलकानि = Phalanges. (Also Phalanx.) २ अङ्गुष्ठे मध्यनलकाभावात् ।

ताङ्गुष्ठात्, अङ्गुष्ठे तु पश्चिमनलकाग्रेण सन्धिः मध्यमनलकाभावात्। मध्य-श्रेणीस्थानि चत्वारि तूभयतः[1] सन्धिमन्ति। पश्चिमश्रेणीस्थानि पञ्च तान्यप्येवम्[2]।

**कराङ्गुलीमूलशलाकाः[3]**—कराङ्गुलीनां मूलतः प्रतिकरं पञ्च शलाकास्ताः कराङ्गुलीमूलशलाका नाम, ताभिरालम्ब्यते करतलम्। मूलतश्च तानि यथायथं कूर्च्चास्थिभिः सन्धीयन्ते अग्रतश्च पश्चिमाङ्गुलीनलकैः। अतएव कूर्च्चास्थ्नां "शलाकाधिष्ठान"-संज्ञा। तत्रेमे विशेषाः।

**प्रथमा—अङ्गुष्ठमूलशलाका** नाम, सा मूलशलाकासु ह्रस्वतमा मूलतश्चैकेन सन्धिलक्ष्मणोपलक्षिता पर्य्याणकाख्येन कूर्च्चास्थ्ना सन्ध्यर्थम्।

**द्वितीया तर्ज्जनीमूलशलाका** नाम, सा मूलतश्चतुर्भिः सन्धिलक्ष्मभिरुपलक्षिता पर्य्याणक-कूटक-मध्यकूटाख्यैस्त्रिभिः कूर्च्चास्थिभिः मध्यमामूलशलाका-मूलपार्श्वेन च सन्धानाय।

**तृतीया—मध्यमामूलशलाका** नाम, सा त्रिभिः सन्धिलक्ष्मभिरङ्किता मूलतः, मध्ये मध्यकूटाख्येन कूर्च्चास्थ्ना, उभयतश्च तर्ज्जन्यनामिकयोः मूलशलाकामूलपार्श्वाभ्यां सन्ध्यर्थम्।

**चतुर्थी—अनामिकामूलशलाका** नाम, सा सन्धिलक्ष्मचतुष्टयेणाङ्किता मूलतः। तत्र मध्यस्थे सन्धिलक्ष्मणी मध्यकूट-फणधर-संज्ञाभ्यां कूर्च्चास्थिभ्यां सन्धानाय। पार्श्वगे तु सन्धिलक्ष्मणी तर्ज्जनीकनिष्ठयोः मूलशलाका-मूलपार्श्वाभ्यां सन्धिसूचनाय।

**पञ्चमी—कनिष्ठामूलशलाका** नाम, तस्या मूलतो द्वे सन्धिलक्ष्मणी, तत्रैकं फणधरेण, अपरमनामिकामूलशलाकामूलपार्श्वेन सन्ध्यर्थम्।

ता एताः कर-मूलशलाका व्याख्याताः। तासां नानास्थिभिः सन्धिप्रकार-स्मरणार्थं श्लोकास्तु पादास्थिवदेव, केवलं तत्रैव[4] "पादमूलशलाका" इत्यत्र "कर-मूलशलाका" इति पाठपरिवृत्तिः कार्य्या।

---

१ पुरोऽङ्गुलीनलकैः पश्चात् पश्चिमनलकैः। २ उभयतः सन्धिमन्तीत्यर्थः। सन्धिश्च कनिष्ठाद्यङ्गुलीचतुष्टये पुरो मध्यनलकैरङ्गुष्ठे पुरोऽग्रिमनलकेन, पश्चात्तु पञ्चस्वपि अङ्गुलीमूलशलाकाग्रैः। ३ कराङ्गुलीमूलशलाकाः = Metacarpals. ४ दृश्यतां १९ पृष्ठे।

**अथ करकूर्चास्थीनि**[1]—करकूर्चास्थीनि नाम मणिबन्धनिर्मापकानि तनुह्रस्वविषमाणि प्रतिकरमष्टौ। तान्येव कर-"शलाकाधिष्ठानानि" नाम। तानि श्रेणीद्वयविन्यस्तानि। तत्रोर्द्ध्वश्रेण्यां चत्वारि, क्रमेण नौनिभार्द्धचन्द्रोपलक वर्त्तुलकाख्यानि। अधःश्रेण्यां चत्वारि, पर्य्याणक-कूटक-मध्यकूट-फणधर संज्ञानि। तत्रोर्द्ध्वश्रेणीस्थाणां चतुर्णां मध्ये प्रथमानि त्रीणि मणिबन्धसन्धौ प्रविष्टानि। वर्त्तुलकाख्यन्तु वहिः सन्धितः, तत् कण्डरान्तरीयं चणकास्थीति केचित्। तत्र—

**नौनिभं**[2] नाम—(८म चित्रे १) नावाकारं कूर्चास्थि, तुल्यसंज्ञेन पाद-कूर्चास्थ्ना सदृशम्। तद् बहिःस्थेन क्षुद्रार्वुदेनोपलक्षितं, ऊर्द्ध्वं सन्धिलक्ष्मयुतञ्च प्रकोष्ठास्थ्नः अधःप्रान्तेन सन्ध्यर्थम्। अस्य पार्श्वतः खातोदरं सन्धिलक्ष्म अर्द्ध-चन्द्रमध्यकूटकयोः पार्श्वाभ्यां सन्धानाय। निम्नसीम्नि च सन्धिलक्ष्म पर्य्याणक-कूटकयोरूर्द्ध्वप्रान्ताभ्यां सन्ध्यर्थम्। पश्चिमतश्च नौनिभस्य उच्चावचा रेखा मणि-बन्धस्नायुसूत्राणां संयोगाय।

**अर्द्धचन्द्रं**[3] नाम—(८म चित्रे२) तादृशाकारेण सन्धिलक्ष्मणा बहिरुप-लक्षितं कूर्चास्थि, तत्रार्द्धचन्द्रलक्ष्मणा नौनिभेन सह सन्धिः। अपरञ्चास्य शिरसि सन्धिलक्ष्म बहिःप्रकोष्ठास्थिप्रान्तेन सन्ध्यर्थम्, इतराणि तु सन्धिलक्ष्माणि उपलक-फणधर-मध्यकूट-संज्ञैः कूर्चास्थिभिः सन्धिसूचकानि।

**उपलकं**[4] नाम—तृतीयं कूर्चास्थि न्युब्जपृष्ठं सन्धिलक्ष्माङ्कितञ्चोपरिष्टात् मणिबन्ध-सन्धि-मध्यवर्त्तिना त्रिकोणतरुणास्थ्ना सन्धानाय। त्रीण्यत्र चापराणि सन्धिलक्ष्माणि क्रमेण अर्द्धचन्द्र-फणधर-वर्त्तुलकाख्यैः कूर्चास्थिभिः सन्ध्यर्थम्।

**वर्त्तुलकं**[5] नाम प्रायेण वर्त्तुलाकारं क्षुद्रतमं कूर्चास्थि। सन्धिलक्ष्म चात्रैकमुपलकेन सन्धिव्यञ्जनाय।

---

१ Carpal Bones. २ नौनिभं = Scaphoid. ३ अर्द्धचन्द्रम् = Semliunar. ४ उपलकं = Cuneiform. ५ वर्त्तुलकं – Pisiform.

**पर्य्याणकं**[1] नाम—पृष्ठतः पर्य्याणकाकारेण सन्धिलक्ष्मणा चिह्नितमङ्गुष्ठ-मूलशलाकामूलेन सन्धानाय। त्रीणि चात्रापराणि सन्धिलक्ष्माणि क्रमेण नौनिभ-कूटक-तर्ज्जनीमूलशलाकामूलैः सम्ब्यर्थम्। गभीरा चास्य मध्यतः सीता बहिस्थायाः पाणिसङ्कोचन्या[2]ख्यपेश्याः कण्डरान्तविवर्त्तनाय।

**कूटकं**[3] नाम—कूटाकारं क्षुद्रं कूर्चास्थि। तत्र चत्वारि सन्धिलक्ष्माणि। तेषामूर्द्धतनं नौनिभेन, बहिःसीमस्थं पर्य्याणकेन, अन्तःसीमस्थं मध्यकूटकेन, अधःसीमस्थं तर्ज्जनीमूलशलाकामूलेन सन्धिमत्।

**मध्यकूटं**[4] नाम—बृहत्तमं कूर्चास्थि, तद् ऊर्द्धतः सन्धिलक्ष्माङ्कितेन मुण्डेनोपलक्षितमर्द्धचन्द्राख्यकूर्चास्थ्ना सम्ब्यर्थम्। बहिःसीम्नि चास्य द्विभाग-विभक्तं सन्धिलाञ्छनं क्रमेण नौनिभ-कूटकाभ्यां सन्धिसूचकम्, अन्तःसीम्नि चात्रैकं सन्धिलक्ष्म फणधरपार्श्वेण सम्ब्यर्थम्। अधस्तु सन्धिलाञ्छनं तर्ज्जनीमध्य-मानामिकानां मूलशलाकामूलैः सन्धानाय।

**फणधरं**[5] नाम—सर्पफणाकारेण प्रवर्द्धनकेनोपलक्षितं त्रिकोणप्रायं कूर्चास्थि। तद् ऊर्द्धतः कोणाकारं मध्यकूटकोपलकयोरन्तरालप्रविष्टम्, पार्श्व-योश्च ताभ्यामेव सन्धिमत्। निम्नतश्चात्र द्विभागविभक्तं सन्धिलक्ष्म अनामिका-कनिष्ठामूलशलाकामूलाभ्यां सम्ब्यर्थम्। अस्य च फणोदरे विवर्त्तन्ते अङ्गुली-सङ्कोचनीपेशीनां कण्डराः।

सर्व्वाणि च कूर्चास्थीनि सन्धिलक्ष्मवर्ज्जमन्यत्र उच्चावचानि मणिबन्धस्नायु-सूत्राणां संयोगाय। तदेवं करास्थीनि व्याख्यातानि।

---

१ पर्य्याणकं = Trapezium. २ Flexor Carpi Radialis. ३ कूटकं = Trapezoid. ४ मध्यकूटं = Os magnum. ५ फणधरं = Unciform.

[ ९म चित्रम्—प्रकोष्ठास्थिनी ]




## अथ प्रकोष्ठास्थिनी ।

प्रकोष्ठास्थिनी तु द्वे प्रायस्तुल्यपरिणाहे। तत्रैकं बहिःसीमस्थमङ्गुष्ठानुपूर्व्या स्थितं, तद् **बहिःप्रकोष्ठास्थि** नाम। अपरमन्तःसीमस्थं कनिष्ठानुपूर्व्या स्थितं तद् **अन्तःप्रकोष्ठास्थि** नाम। तयोः प्रथमं प्रधानतो मणिबन्धसन्धिधारकं स्थूलेनाधःप्रान्तेन। द्वितीयं कूर्पर सन्धिनिष्पादक मूर्द्धप्रान्तेन तादृशेन। उभयोरपि क्वचित् 'अरत्नि'[1]संज्ञयापि व्यपदेशः।

तत्र—**बहिःप्रकोष्ठास्थि**[2] नाम प्रकोष्ठबहिर्भागनिष्पादकं नलकास्थि। तस्य त्रयो भागाः—ऊर्द्ध्वप्रान्तोऽधःप्रान्तो मध्यनलकञ्च।

तस्योर्द्ध्वप्रान्तस्तावत् चक्राकारेण कोरमध्येन मुण्डेनोपलक्षितः (९म चित्रे १)। कोरे चात्र (तत्रैव १सं)विवर्त्तते प्रगण्डास्थ्नोऽधःप्रान्तीया कन्दली। अन्तःसीम्नि च मुण्डस्यार्द्धचन्द्राकारं सन्धिलक्ष्म (तत्रैव सं२) चक्रनेमिर्नाम तद् अन्तःप्रकोष्ठास्थ्न ऊर्द्धप्रान्तेन (तत्रैव ८सं) सन्ध्यर्थम्। तदाश्रित्य च विवर्त्तते तदस्थिमुण्डं कूर्परसन्धिमध्यतः।

**९म चित्र-व्याख्या**—बहिःप्रकोष्ठास्थ्नि—१ चक्रमुण्डं, २ ग्रीवा, १ सं ऊर्ध्वस्थिकन्दल्या सन्धिमत् कोरम्, २ सं अन्तःप्रकोष्ठास्थि-पार्श्वेन सन्धिमान् प्रदेशः ३ अर्वुदोत्सेधः—द्विशिरस्काख्यपेशीनिवेशाय। बहिर्मणिकः ४ सं अन्तःप्रकोष्ठास्थ्ना सन्धिसूचकम् ३ सं मणिबन्धसन्धिलक्ष्म। ५ सीता ( कण्डराविवर्त्तनाय। ) अन्तःप्रकोष्ठास्थ्नि—६ कूर्परकूटम् ७ चञ्चुप्रवर्द्धनम् ८ मणिमुण्डं ९ अन्तर्मणिकः। ५ सं बहिःप्रकोष्ठास्थ्ना सन्धिसूचकं ८ सं, चक्रनेमिखातस्थं सन्धिलक्ष्म। ७ सं, प्रगण्डास्थ्नो डमरुप्रवर्द्धनकेन सन्धिमत्। अत्रेत्थं निविशन्ते पेश्यः—पे १ पे ५ इत्यनयोः—करोत्तानिनी। पे २ अङ्गुलीसंकोचनी दीर्घा। पे ३ करविवर्त्तनी उत्तरा (कङ्कणिका)। पे ४ अङ्गुलीसंकोचनी अग्रपर्व्विका। पे ६ कूर्परद्वारिका। पे ७ अङ्गुलीसंकोचनी मध्यपर्व्विका। पे ८ करविवर्त्तनी अधरा। ३ इत्यङ्कं परितः, द्विशिरस्का। क—प्रकोष्ठान्तराला कला।

---

१ प्राचां ग्रन्थेषु ( यथा च० शा० ७ अ. ) २ बहिःप्रकोष्ठास्थि = Radius.

मूलतश्चास्य मुण्डस्य ग्रीवेव ग्रीवा, तदधश्चार्बुदाकार उत्सेधः ( तत्रैव क्रमात् २, ३ ), तत्र द्विशिरस्काख्यपेश्याः[1] कण्डरान्तसंयोगः।

अधःप्रान्तस्तु वहिःप्रकोष्ठास्थ्नः[2]—त्रिकोणेन कोरोदरेण च सन्धिलक्ष्मणोपलक्षितो निम्नतः अर्द्धचन्द्र-नौनिभाख्यकूर्चास्थिद्वयेन सम्ध्यर्थम्। अन्तःसीम्नि चात्रापरं सन्धिलक्ष्म ( ८म चित्रे ४ सं० ) तदन्तःप्रकोष्ठास्थ्नः अधःप्रान्तपार्श्वेन सन्धिं सूचयति। वहिःसीम्नि चात्र त्रिकोणकं प्रवर्द्धनकं बहिर्मार्गिको नाम ( ८म चित्रे ४ ) मणिबन्धसन्धेर्बाह्यस्नायुरज्जुसंयोगाय। तदेतत् त्वचोऽधस्तादनुभवनीयम्। अस्य बहिः पश्चिमतश्च दृश्यन्ते सीताः ( ८म चित्रे ५ ) अङ्गुष्ठप्रसारणीनां पेशीनां कण्डरान्त गतागताय।

मध्यनलकं पुनर्बहिःप्रकोष्ठास्थ्नः—त्रिधारमीषद्वक्रमन्तःसीम्नि खरधारञ्च। खरधारायाञ्च संयुज्यते प्रकोष्ठास्थ्नोरन्तरालस्था कला ( ८म चित्रे क )।

पुरश्च मध्यनलकस्य दृश्यते स्फुटमस्थिधमनीविवरम्।

मध्यनलके चेह निविष्टाः प्रकोष्ठास्थिपेशीनां द्वादशानां मध्ये अष्टौ यथास्थानम्। तद्विवरणमग्रे।

**अन्तःप्रकोष्ठास्थि**[2] नाम—प्रकोष्ठस्यान्तःसीम्नि स्थितं नलकास्थि। तस्य त्रयो भागाः—ऊर्द्धप्रान्तोऽधःप्रान्तो मध्यनलकञ्चेति।

तत्रोर्द्धप्रान्त.—स्थूलतरः प्रवर्द्धनकाभ्यामुपलक्षितश्च। तयोरूर्द्ध्वं प्रवर्द्धनकं कूर्परकूटं नाम ( तत्रैव ६ )। तदिदं सर्पफणाकारं पुरःस्थितेनोन्नतमध्येन सन्धिलक्ष्मणोपलक्षितञ्च। तस्य च चूडाग्रं निविशते प्रगण्डास्थ्नोऽधःप्रान्तस्य पश्चिमस्थे खाते, सन्धिलक्ष्म तु प्रगण्डास्थ्नोऽधःप्रान्तवर्त्तिना डमरुकाकारेण सन्धिलक्ष्मणा सन्धिं सूचयति। पश्चिमतः पुनरस्य प्रवर्द्धनकस्योत्सेधः कूर्परनिष्पादकः त्वचोऽधस्तादनुभवनीयश्च। अस्यैव प्रवर्द्धनकस्य पार्श्ववर्त्तिन्योः रेखयोः संयुज्यते त्रिशिरस्काख्या[3] पेशी। कूर्परकूटमेव जानुकपालसादृश्यात् कूर्परकपालिकेति प्राञ्चः।

अत्रैवाधःस्तनं प्रवर्द्धनकं चञ्चाकारम् चञ्चुप्रवर्द्धनं नाम। तदिदं पुरस्त्रिकोणाग्रं शिरसि सन्धिलक्ष्मयुतञ्च। विवर्त्तते चैतत् प्रगण्डास्थ्नोऽधःप्रान्तीयं डमरुकाकारं सन्धिलक्ष्म समाश्रित्य। अग्रे चास्य प्रवर्द्धनकस्य निविशते तस्यैव डमरु-

१ Biceps. २ Ulna. ३ Triceps.

सन्धिलक्ष्मणः पुरःस्थे खाते ( ९म-१०म चित्रयोर्द्रष्टव्यम् )। अधश्चास्य विषमः प्रदेशः, तत्र संयुज्यते कूर्परद्वारिकाख्या[1] पेशी ( ९म चित्रे पे ६ )।

बहिःसीम्नि पुनरन्तःप्रकोष्ठास्थ्न ऊर्द्ध्वप्रान्तस्य दृश्यते कोरमध्यमपरं सन्धिलक्ष्म (तत्रैव सं ८) यदाश्रित्य विवर्त्तते बहिःप्रकोष्ठास्थ्न ऊर्द्ध्वप्रान्तीया चक्रनेमिः स्वेन सन्धिलक्ष्मणा ( तत्रैव सं २ )। तदिदं चक्रनेमिखातं नाम।

अनयोश्च प्रवर्द्धनकयोश्चक्रनेमिखातस्य च परिधौ संयुज्यते कूर्परसन्धिवन्धनः स्नायुकोषः। ( चञ्चुप्रवर्द्धनकस्यान्तःसीम्नि चोत्सेधो मूलतश्च रेखा, क्रमेण 'अङ्गुलीसंकोचनी अग्रपर्विका', 'करोत्ताननी' च—इत्याख्ययोः पेश्योः[2] कण्डरानिवेशाय। )

मध्यनलकन्तु तावदन्तःप्रकोष्ठास्थ्नस्त्रिधारं वहिःसीम्नि तीक्ष्णधारञ्च, तस्य पुरोभागे मध्यतः अस्थिधमनीविवरद्वारम् तत्र बाह्यसीमस्थायां तीक्ष्णधारायां संयुज्यते प्रकोष्ठान्तरालस्था कला ( नवम चित्रे क )।

अत्र च मध्यनलके संयुज्यन्ते द्वादशानां प्रकोष्ठपेशीनां मध्ये नव पेश्यो यथास्थानम्। [ तद्विवरणं चित्रे पेश्यध्याये च द्रष्टव्यम् ]।

अधःप्रान्तस्तु अन्तःप्रकोष्ठास्थ्नो—वर्त्तुलप्रायेणान्तःसीम्नि प्रवर्द्धनकवता मणिमुण्डाख्येन[3] वर्त्तुलेनोपलक्षितः (नवम चित्रे २)। तच्च प्रवर्द्धनकमन्तर्मणिकं[4] नाम ( तत्रैव ९ ) तत्र संयुज्यते मणिवन्धसन्धेरन्तःसीमस्था स्नायुरज्जुः। तस्य च पश्चिमस्थायां स्रोतायां विवर्त्तते 'अन्तःस्थायाः करप्रसारण्याः'[5] पेश्याः कण्डरा। मणिमुण्डञ्च सन्धिलाञ्छनाङ्कितं पार्श्वतः बहिःप्रकोष्ठास्थ्नोऽधःप्रान्तेन सन्ध्यर्थं ( तत्रैव ४सं ), तदधश्च सन्धीयते मणिवन्धमध्यन्तरालस्थं त्रिकोणं तरुणास्थि ( तत्रैव ५सं इत्यत्र )।

---

१ Brachialis. २ Flexor Sublimis Digitorum & Prnotaor Radi Teres. ३ मणिकाख्यप्रवर्द्धनधारणात् मणिमुण्ड संज्ञा। मणिकसंज्ञा तु चरककृता ( च० शा० ७ अ० )। ४ Styloid Process. ५ Extensor Carpi Ulnaris.

[ १०म चित्रं—प्रगण्डास्थि ]

( ऊर्द्धम् )




( अधः )

# अथ प्रगण्डास्थि ।

**प्रगण्डास्थि नाम—(१०म चित्रम्)**

बाहुस्थं[1] स्थूलतमं नलकास्थि। तस्य त्रयो भागाः—ऊर्द्ध्वप्रान्तोऽधःप्रान्तो मध्य-नलकञ्चेति।

तत्रोर्द्ध्वप्रान्तः—अर्द्धवर्त्तुलाकारेणा-न्तर्मुखेन मुण्डेनोपलक्षितः (१०म चित्रे १)। तदिदं मुण्डमंसपीठस्थे[2] खाते सन्धीयते श्लक्ष्णेन सन्धिलक्षणा, तत्परितश्च निबध्यते अंससन्धिबन्धनः स्नायुकोषः।

अधश्चास्य मुण्डस्य द्वावुत्सेधौ बाह्यसीम्नि पुरःसीम्नि च क्रमात् महापिण्डक लघुपिण्डक—संज्ञौ (१०म चित्रे २, ३)। तत्र महापिण्डकस्य शिखरतः पृष्ठतश्चोद्भवन्ति तिस्रः पेश्यः क्रमेण 'अंसपृष्ठिका उत्तरा'[3] (तत्रैव पे १) 'अंस-पृष्ठिका अधरा'[4], 'अंसाधरिका लघ्वी'[5] चेति। लघुपिण्डके तु निविशते 'अंसान्तरिका'[6] नाम पेशी (तत्रैव पे २)। मध्ये च

### १०म-चित्रव्याख्या—

१ मुण्डं २ महापिण्डकं ३ लघुपिण्डकं ४ पिण्डकद्वयमध्यगा परिखा। ५ बाह्यार्ब्बुदम् ६ आन्तरार्ब्बुदं ७ कन्दली ८ डमरुकं ९, १०, पुरःखातद्वयम्। अथात्रैता निविशन्ते पेश्यः।—

पे १ अंसपृष्ठिका उत्तरा। पे २ अंसान्तरिका। पे ३ उरःप्रच्छदा गरिष्ठा। पे ४ कटिपार्श्वप्रच्छदा। पे ५ अंसाधरिका बृहती। पे ६ अंसपिण्डिका। पे ७ काकोष्ठिका। पे ८ कूर्परद्वारिका। पे ९ दीर्घा बाहु-संकोचनी। पे १० दीर्घा करप्रसारणी। पे ११ करप्रसारणी-संज्ञं पेशीचतुष्टयं, करोत्तानर्नी च। पे १२ दीर्घा करविवर्त्तनी। पे १३ पाणिसंकोचन्याख्यपेशीद्वयम्, अङ्गुलीसंकोचनी मध्यपर्व्विका, करतलप्रसारणी च।

---

१ प्रगण्डास्थि = Humerus.. २ अंसपीठं नाम अंसकपालस्य प्रदेशविशेषः। तद्विवरणं यथास्थानं द्रष्टव्यम्। ३ Supraspinatus. ४ Infraspinatus. ५ Teres minor. ६ Subscapularis.

पिण्डकयोः परिखा (तत्रैव ४) 'द्विशिरस्का'[१]ख्य-पेश्याः काण्डराधारणाय । तद्बहि-स्तटे निविशते 'गरिष्ठा उरःप्रच्छदा'[२]ख्या पेशी (तत्रैव पे ३), तदन्तस्तटे च 'कटि-पार्श्वप्रच्छदा'[३] (तत्रैव पे ४), तदधस्तात् 'अंसधारिका[४] बृहती' च ( तत्रैव पे ५ ) ।

<u>मध्यनलकन्तु</u>—प्रगण्डास्थ्न उपरिष्टाद्दण्डाकारमधस्तात् त्रिधारप्रायञ्च । तत्र मध्यतो बहिःसीम्नि ईषदुन्नतः प्रदेशः ( १०म चित्रे पे ६ ) 'अंसपिण्डिका'[५]ख्य-पेश्या निवेशाय । अस्याधः पश्चिमतो नातिगभीरा सीता गम्भीराख्य धमन्यादि[६]-धारणाय । तस्याश्च तटयोः 'त्रिशिरस्का'[७]ख्यपेश्याः प्रभवस्थानम् । अन्तःसीम्नि च मध्यतः 'काकोष्ठिका'[८]ख्यपेश्या निवेशः ( तत्रैव पे ७ ) । निम्नार्द्धपुरस्तलात्तु मध्यनलकस्य 'कूर्परद्वारिका'[९]ख्य-पेश्याः ( तत्रैव पे ८ ) समुद्भवः ।

अधोभागे पुनर्मध्यनलकस्य बाह्यान्तःसीम्नोर्द्वे धारे । तयोर्बाह्यधारायां क्रमात् 'दीर्घाया बाहुसंकोचन्या[१०]:' ( तत्रैव पे ९ ) 'दीर्घायाः करप्रसारण्या[११]श्च' पेश्याः ( तत्रैव पे १० ) संयोगः । अमू च बाह्यान्तरीये धारे क्रमेण बाह्या-न्तरीयाभ्यामर्व्वुदाभ्यां सङ्गते अधस्तात् ।

<u>अधःप्रान्ते</u>—पुनः प्रगण्डास्थ्नो लक्षणीयानि क्रमादेतानि नाम । अर्व्वुदे द्वे बाह्यमाभ्यन्तरञ्च, कन्दली, डमरुकं, कूर्परखातं, पुरःखातद्वयञ्च । तत्र—

<u>बाह्यार्व्वुदं</u>—नाम ( १०म चित्रे ५ ) बहिःसीमस्थ उत्सेधः । तत्र सम्ब-ध्यते बहिःस्था कूर्परसन्धिबन्धनी स्नायुः । प्रभवश्चा[१२]यं चतसृणां 'करप्रसारणी'-पेशीनां सम्मिलितमूलानां, 'करोत्तानन्या[१३]श्च' पेश्याः ( तत्रैव पे ११ ) । अस्यैव पृष्ठतः 'कूर्परपृष्ठिका[१४]ख्य'-पेश्याः समुद्भवः ।

<u>आन्तरार्व्वुदं</u>—नाम ( १०म चित्रे ६ ) अन्तःसीमस्थं स्फुटतरं त्रिकोण-प्रायमर्व्वुदम् । तत्र सम्बध्यते कूर्परसन्धेरन्तःसीमस्था स्नायुरज्जुः । प्रभव-

१ Biceps. २ Pectoralis major. ३ Latissimus Dorsi. ४ Teres major. ५ Deltoid. ६ Superior Profunda Artery & Musculo-spiral Nerve. ७ Triceps. ८ Coraco-Brachialis. ९ Brachialis. १० Supinator Longus. ११ Extensor Carpi Radials Longior. १२ Common origin of Extensor Carpi Rad. Brev, Ext. Communis. Digit., Ext. Minimi Digiti & Ext. Carpi Ulnaris. १३ Supinator Brevis. १४ Anconeus.

श्वायमुपरिष्टात् ( तत्रैव पे १२ ) 'दीर्घाया: करविवर्त्तन्याख्य'-पेश्याः ; तदधश्च ( तत्रैव पे १३ ) 'पाणिसंकोचन्याख्य'-पेशीद्वयस्य, 'मध्यपर्व्विकाया अङ्गुली-संकोचन्याः' 'करतलप्रसारण्या'श्च पेश्याः ।

कन्दली—नाम ( १०म चित्रे ७ ) बाह्यार्व्वुदस्य पुरोवर्त्ती सन्धिलक्ष्मा-ङ्कितो भागः, यमाश्रित्य विवर्त्तते कूर्परसन्धिमध्यगं वहिःप्रकोष्ठास्थ्नः कोरमध्यं मुण्डम् ( ८म चित्रे १ ) ।

डमरुकं—नाम ( १०म चित्रे ८ ) डमरुसमाकारो निम्नमध्यः सन्धिलक्ष्म-युतो भागः । सन्धीयते चेदमन्तःप्रकोष्ठास्थ्न ऊर्द्ध्वप्रान्तस्थाभ्यां प्रवर्द्धनकाभ्याम् ( ८म चित्रे ६, ७ ) ।

पुरःखातद्वयं—( १०म चित्रे ८, १० ) नाम सन्धिलक्ष्माङ्कितभागस्योर्द्ध्वं पुरस्तादन्तर्बहिःसीम्नोः स्फुटं गर्त्तद्वितयं, तयोः क्रमान्निविशेते ( बाहुसंकोचे सति ) अन्तःप्रकोष्ठास्थ्न ऊर्द्ध्वप्रान्तस्थं चञ्चुप्रवर्द्धनं ( ८म चित्र ७ ) वहिःप्रको-ष्ठास्थ्नो मुण्डांशश्च ।

कूर्परखातं—नाम प्रगण्डास्थ्नोऽधःप्रान्तस्थ पश्चिमखातं, तत्र धार्य्यते प्रसा-रितवाहोः कूर्परकूटाग्रम् ।

त्रिंशदेवमेकस्मिन् बाहावस्थीनि व्याख्यातानि, एवमपरेऽपि । तदेतत् सविंशमस्थिशतं शाखासु व्याख्यातम् ।

[ इति शाखास्थिविज्ञानीयः प्रथमः परिच्छेदः ]

---

१ Pronator Radil Teres. २ Flexor Carpi Radialis & Ulnaris. ३ Flexor Sublimis Digitorum. ४ Palmaris Longus. ५ कूर्परकूटं नाम अन्तःप्रकोष्ठास्थ्न ऊर्द्ध्वतनं प्रवर्द्धनकमित्युक्तपूर्व्वम् ( ८म चित्रे ६ ) ।




[ ११श चित्रम्—पृष्ठवंश: ]

# अथ द्वितीयो

## मध्यकायास्थिविज्ञानीय: परिच्छेद: ।

### तत्रादौ पृष्ठवंशं ब्रूम: ।

**पृष्ठवंशो[1]** हि मध्यालम्बनं कायस्य यमाश्रित्य वर्त्तन्ते शाखास्ततश्च: शिरश्च । सुषुम्नाकाण्डधारकश्च स: । सोऽयं कशेरुकासंज्ञै रुपर्य्युप-रिसंहितैरीषच्च-लैश्चतुर्व्विंशति-संख्यकैरस्थि-वलयैर्निर्म्मित: पर्व्वभिरिव वंशदण्डोऽन्त:-शुषिर: स्थूलश्चाधोऽध: ।

स चायं सन्धीयते ऊर्द्ध्वं शिरसा अधस्त्रिकास्थ्ना । [दृश्यतां द्वितीय-कङ्काल चित्रम् १६ पृष्ठस्य पुर: ] सम्मुखतो दृष्टश्च कंकाले प्रतिभाति त्रिधा धनुर्वक्र:, तत्र ग्रीवायां कट्याञ्च कूर्मपृष्ठवदुत्सङ्ग:, पृष्ठे तु खातोदरता ( ११श चित्रम् ) ।

तत्र ग्रीवायां कशेरुका: सप्त, पृष्ठे द्वादश, कट्यां पञ्चेति साकल्येन चतुर्व्विंशति: । त्रिकास्थि चानुत्रिकास्थि चेति द्वयमानुपूर्व्यां स्थितमपि पृथगेव व्याख्यास्यते ।

**कशेरुका:[2]** नाम पृष्ठवंश-निर्म्मापकान्यस्थिवलयानि । तत्र सामान्यत: प्रतिकशेरुकं द्वौ भागौ प्रधानभूतौ--कशेरुपिण्डं, कशेरुचक्रञ्च सह प्रवर्द्धनकै: ( १२श चित्रम् ) ।

---

१ Vertebral Column or Spine.

२ Vertebræ.

[ १२ चित्रं—पृष्ठकशेरुका ]

[ पुरः ]




[ पश्चात् ]

तत्र **कशेरुपिण्डं**[1]—नाम पिण्डाकारो नातिघनसंघातः कशेरुपुरोभागः।

**कशेरुचक्रं**[2]—नाम स्वनामव्याख्यातः कशेरुकापरार्द्धः पश्चिमस्थः। तन्मध्ये सुषुम्नाविवरम्। तदिदं कशेरुचक्रं संसज्यते कशेरुपिण्डेनोभयतो चक्रमूलाभ्याम्, निर्मीयते च पत्रकाभ्याम्[3]। उपर्य्यधश्च प्रतिचक्रमूलमेकैकं छिद्रार्द्धं, तथा च प्रतिकशेरुचक्रं चत्वारि छिद्रार्द्धानि। तानि ऊर्द्धमधश्च संहितयोः कशेरुकयोश्छिद्रार्द्धैर्मिलित्वा सम्पद्यन्ते तावन्ति पूर्णच्छिद्राणि सुषुम्नाप्रताननिर्गमाय। अथात्र कशेरुचक्रे संगतानि सप्त प्रवर्द्धनकानि, तद्यथा—

**पृष्ठकण्टकं**[4]—नामैकं पश्चिमस्थं प्रवर्द्धनं त्वचोऽधस्तदनुभवनीयम्।

**कशेरुबाहु**[5]-संज्ञे द्वे पार्श्वयोः, त एव बाहुप्रवर्द्धन संज्ञे।

**सन्धिप्रवर्द्धनकानि**[6]—चत्वारि, द्वे उपरिष्टात् द्वे चाधस्तात् सन्धिलक्ष्माङ्कितानि, तानि ऊर्द्ध्वाधःकशेरुकासंयोजकानि। (तदेतदखिलं १२श चित्रे स्फुटम्)।

तान्येतानि सर्व्वकशेरुका-साधारणानि लिङ्गानि[7]। विशेषोऽत्र ऊर्द्धम्।

---

१ कशेरुपिण्डम् = Body of a Vertebra. २ कशेरुचक्रम् = Arch. ३ पत्रके = Laminae. ४ पृष्ठकण्टकम् = Spinous process. ५ कशेरुबाहुः (बाहुप्रवर्द्धनकं वा) = Transverse Process. ६ सन्धिप्रवर्द्धनकानि = Articular Processes. ७ सर्व्वकशेरुका-साधारणत्वेऽपि लिङ्गानां पृष्ठकशेरुकासु स्फुटतमत्वात् चित्रे पृष्ठकशेरुकैव प्रदर्शिता।

[ १३श चित्र—ग्रीवाकशेरुका ]

[ पुरः ]




[ पश्चात् ]

**१३श चित्रव्याख्या**—कम, कशेरुपिण्डं १, १, तस्यैव चोष्ठद्वयम्। २, २ वाहुप्रवर्द्धनके। ३, ३ मातृकाच्छिद्रद्वयं ४, ४ सन्धिप्रवर्द्धनकद्वयमूर्द्धतलं, ५, ५ तदेवाधस्तलम्। ६ सुषुम्नाविवरं, क—पृष्ठकण्टकम्।

## अथ ग्रीवाकशेरुकाः[१]—

ग्रीवाकशेरुकाः सप्त। तास्वेतान्यवच्छेदकलिङ्गानि—

(१) कशेरुपिण्डानि ह्रस्वानि घनायतपार्श्वान्योष्ठवन्ति च (१३श-चित्रे—कम)।

(२) पत्रकाणि तनुह्रस्वानि अधोऽधःस्थादीनि च, सुषुम्नाविवरञ्च त्रिकोणप्रायम् (तत्रैव ६)।

(३) पृष्ठकण्टकानि द्विधाभिन्नाग्राणि, दीर्घतराणि च क्रमादधोऽधः (तत्रैव क)।

(४) वाहुप्रवर्द्धनकानि ह्रस्वानि द्विधाभिन्नानि (तत्रैव २, २), सच्छिद्राणि च 'मस्तिष्क-मातृका'ख्ययोर्धमन्योरनुप्रवेशाय[२]। अत एवैषां छिद्राणां (तत्रैव ३, ३) 'मातृकाच्छिद्र' संज्ञा।

(५) सन्धिप्रवर्द्धनकानि ह्रस्वतमानि उत्तानानि च। (तत्रैव ४, ४ ; ५, ५)

[ १४श चित्र—प्रथमा ग्रीवाकशेरुका—चूडावलया नाम ]

[ पुरः ]




[ पश्चात् ]

**१४श-चित्र-व्याख्या**—१ कशेरुपिण्डं, २ दन्तप्रवर्द्धनकेन सन्धिसूचकं, ३ मध्यरज्जुकाख्यस्नायोः संस्थानसूचकं, ४, ४ पश्चात्कपालमूलकोटिभ्यां सन्धानाय सन्धिलाञ्छनं, ५ सुषुम्नाविवरम्, ६ पृष्ठकण्टकम् ७,७ वाहुप्रवर्द्धनकद्वयम् ८,८ मातृकाच्छिद्रद्वयम्।

सप्तसु च ग्रीवाकशेरुकासु, प्रथमा द्वितीया सप्तमी चेति तिस्रः पृथक् लक्षणीयाः इतरवैलक्षण्यात्। तत्र—

### प्रथमा ग्रीवाकशेरुका चूडावलया[३]

नाम। सा पृष्ठवंशचूडायां वलयाकारेति तयासंज्ञा। संहिता चेयमूर्द्ध्वं पश्चिमकपालेनाधश्च दन्तचूडाख्यया द्वितीय-ग्रीवाकशेरुकया। तत्र विशेषाः—

१ Cervical Vertebrae २ मस्तिष्कमातृके धमन्यौ = Vertebral Arteries. ३ Atlas.

(१) कशेरुपिण्डं ह्रस्वं गुटिकाकारञ्च (१४अ चित्रे १), तत्पृष्ठतश्च सन्धिलक्ष्म दन्तचूडाख्यायाः कशेरुकाया दन्तप्रवर्द्धनेन (तत्रैव २—इत्यङ्किता-वकाशस्थितेन) सन्ध्यर्थम् ।

(२) चक्रमूलयोरुपरिष्टात् शिम्बीबीजाकारे सन्धिलक्ष्मणी (तत्रैव ४, ४) पश्चिमशिरःकपालस्य मूलकोटिभ्यां सन्धानाय। अभ्यन्तरतश्चानयोः कलायके मध्यरज्जुकाख्यायाः स्नायोः (तत्रैव ३ इत्यङ्कितस्थानस्थायाः) कोटिद्वय-संयोगाय ।

(३) पृष्ठकण्टकश्च तनुगुटिकाकारम् (तत्रैव ६)।

[ १५अ चित्रम्—द्वितीया ग्रीवाकशेरुका दन्तचूड़ा नाम ]

( पार्श्वतो दृष्टा )

[ ऊर्द्धम् ]




( अधः )

१५अ चित्र-व्याख्या—

१ दन्तप्रवर्द्धनकम् । २ चूड़ावलयाख्यकशेरुकायाः पिण्डपश्चिमस्थेन सन्धिलक्ष्मणा सन्धान-चिह्नम् । ३ मध्यरज्जुकस्नायोः विवर्त्तनखातम् । क, पृष्ठकण्टकम् । सं १ ऊर्द्धतनं सन्धिप्रवर्द्धनम् । सं २ अधस्तनं सन्धिप्रवर्द्धनम् ।

## द्वितीया ग्रीवाकशेरुका—

दन्तचूड़ा[1] नाम । सा चूड़ायां दन्ताकारेण प्रवर्द्धनकेनोपलक्षितेति तथासंज्ञा (१५अ चित्रम्)। अस्य पुनः दन्त-प्रवर्द्धनकस्य (तत्रैव १) चूड़ावलयायाः सुषुम्नाविवरं प्रविष्टस्य (१४ चित्रे २) पुरः पश्चाच्च द्वे खातोदरे लक्ष्मणी (तत्रैव २, ३) तयोः पुरःस्थं चूड़ावलयायाः कशेरुपिण्डपश्चिमेन सन्धिलक्ष्मणा (१५अ-चित्रे २) सन्धीयते; पश्चिमन्तु समाश्रित्य तिष्ठति मध्यरज्जुकाख्या स्नायुः। पार्श्वयोश्च दन्त-प्रवर्द्धनस्य संयुज्यते स्नायुसूत्रे। शिखरे च स्नायुसूत्रं पश्चिमकपाल-मूल योजनाय। शिरो हि सह चूड़ावलयाख्य-कशेरुकया विपरिवर्त्तते दन्तप्रवर्द्धनकमेव मध्यकील-भूतमाश्रित्य पृष्ठवंशोपरिष्टात्।

---

१ Axis.

[ १६श चित्रम्—सप्तमी ग्रीवा-कशेरुका महाकण्टकिनो नाम ]
( पुरः )




**१६श चित्र व्याख्या—**
कम, कशेरुपिण्डम्। सू, सुषुम्नाविवरम्। क, पृष्ठकण्टकम्। १,१, ऊर्द्धतनं सन्धिप्रवर्द्धनकद्वयम् २,२, मातृकाच्छिद्रद्वयम् ३,३ बाहुप्रवर्द्धनके।

## सप्तमी ग्रीवाकशेरुका

**महाकण्टकिनो[1]—नाम (१६श चित्रम्)।**

सा दीर्घतम पृष्ठकण्टकेनोपलक्षितेति तथा-संज्ञा। तत्र च महाकण्टके सम्बध्यते ग्रीवाधरा नाम स्नायुरज्जुः[2]। महाकण्टकश्चैतत् न द्विधा भिन्नाग्रमितरास्विव ग्रीवा-कशेरुकासु। तथापि मातृकाच्छिद्रादि-ग्रीवाकशेरुका-साधारणलिङ्ग-दर्शनात् शक्य-मस्या अभिज्ञानम्।

[१७श चित्रम्—पृष्ठकशेरुका (पार्श्वतो दृष्टा) ]




**१७श चित्र-व्याख्या**—कम, कशेरुपिण्डम्। १, १, सन्धिप्रवर्द्धनके ऊर्द्धतने। २,२, कशेरुपिण्डप्रार्श्वस्थं स्थालकद्वयम्। ४, अधस्तनं सन्धिप्रवर्द्धनकम् (दक्षिणम्)। ५, बाहुप्रवर्द्धनकस्थं स्थालकम्। क, पृष्ठकण्टकम्।

## अथ पृष्ठकशेरुकाः—

पृष्ठे कशेरुकाः द्वादश। तास्विमे विशेषाः। (१७श-चित्रम्, १२श चित्रञ्च)।

(१) कशेरुपिण्डानि मध्याकृतीनि वृत्तार्द्धप्रायाणि च। प्रति-कशेरुपिण्डञ्च द्वे सन्धिलक्ष्मणी स्थालकाख्ये (तत्रैव २. ३)पश्चा-दुभयतः पर्शुकामूलसन्धानाय।

(२) बाहुप्रवर्द्धनकानि प्रायो वर्त्तुलाग्राणि स्थालकाख्यैः सन्धि-लक्ष्मभिरङ्कितानि च (तत्रैव ५)—पर्शुकार्वुदैः सन्ध्यर्थम्। अतएव प्राचां बाहुप्रवर्द्धनकेष्वेव स्थालक[3]-संज्ञा।

(३) पृष्ठकण्टकानि अधोऽधश्छादीनि दीर्घवृत्तमुखानि च (११श चित्रम्)।

---

१ महाकण्टकिनी = Vertebra Prominens. २ Ligamentum Nuchae. ३ यथा चरके (शा० ७ अ०)।

[१८श चित्रम्—विशिष्टाः पृष्ठकशेरुकाः]




१८श चित्र व्याख्या ।—

१म—पृष्ठकशेरुका प्रथमा। ९म—नवमी। १०म—दशमी ११श—एकादशी। १२श—द्वादशी। १, २, ३—कशेरुबाहुस्थानि स्थालकानि पर्शुकासन्धानाय। ५, ६, ७, ८, ९—सन्धिप्रवर्द्धनकानि। सं, पूर्णचक्राकारं स्थालकम्। सं १—अर्द्धचक्राकारं तदेव।

तत्रापि प्रथमा, नवमी, दशमी, एकादशी, द्वादशी चेति पञ्च पृष्ठकशेरुकाः विशेषतो लक्ष्याः (१८श चित्रम्)। तद्यथा—

प्रथमा पृष्ठकशेरुका (तत्रैव १म)—अस्या एकैकस्मिन् पार्श्वे द्वे द्वे स्थालके पूर्णचक्राकारे,—तत्रैकं कशेरुपिण्डपार्श्वत ऊर्द्ध्वसीम्नि, अपरं बाहुप्रवर्द्धनके। अधःसीम्नि पुनः कशेरुपिण्डपार्श्वतश्चक्रार्द्धाकारं स्थालकमपरम्।

द्वितीयान्तु पृष्ठकशेरुकामारभ्य अष्टमीं यावत् प्रतिकशेरुपार्श्वं त्रीणि त्रीणि स्थालकानि (यथा १७श चित्रे)। तेषु पूर्णचक्राकारमेकं बाहुप्रवर्द्धनके, अर्द्धचक्राकारे द्वे कशेरुपिण्डपार्श्वत ऊर्द्ध्वाधःसीम्नोः।

नवम्यां पुनः पृष्ठकशेरुकायामर्द्धचक्राकारमेकमेव स्थालकमेकैकस्मिन् कशेरुपिण्डपार्श्वे ऊर्द्ध्वसीम्नि, अपरं बाहुप्रवर्द्धनके (१८श चित्रे ९म)।

दशम्यान्तु पूर्णचक्राकारं कशेरुपिण्डस्यैकैकस्मिन् पार्श्वे स्थालकमेकमेव, अपरं बाहुप्रवर्द्धनके (तत्रैव १०म)।

एकादश्यां द्वादश्याञ्च (तत्रैव ११श,१२श) कशेरुपिण्डस्यैकैकस्मिन् पार्श्वे पूर्णचक्राकारमेकैकमेव स्थालकं, बाहुप्रवर्द्धनके तु सर्व्वथा स्थालकाभावः। तत्रापि द्वादशी विशेषतः कटिकशेरुकातुल्या त्रिसुवेन बाहुप्रवर्द्धनकेनोपलक्षिता चेति विशेषः।

**कटिकशेरुकाः**—पुनः पञ्च। तास्विमे विशेषाः (११श चित्रम्)।

(१) कशेरुपिण्डानि बृहत्तमानि पार्श्वायतानि च।

(२) पार्श्वप्रवर्द्धनकानि ह्रस्वानि त्रिमुखानि पञ्चवदीषदायतानि च।

(३) पृष्ठकण्टकानि स्थूलह्रस्वानि परशुमुखाकाराणि च।

तत्रापि पञ्चमी कटिकशेरुका विशेषेण परिच्छिद्यते ऊर्द्ध्वमुखाभ्यां बाहुप्रवर्द्धनकाभ्यां तन्वग्रेण पृष्ठकण्टकेन च।

तदेवं चतुर्विंशतिः कशेरुका व्याख्याताः।

## अथ त्रिकास्थि।

[ १८श चित्रम्—त्रिकास्थि ]




१८श चित्र-व्याख्या।—

१, २, ३, ४, ५—त्रिकास्थि निर्म्मापिकाणां कशेरुकाणां सूचकानि। अन्तरालेषु च रेखाचतुष्टयं कशेरुपिण्डसंघातसूचकम्। ६, ६,—त्रिकपक्षद्वयम्। ७, ७ श्रोणिसन्धिलक्षणी। ८, ८ अनुत्रिकास्थ्ना सन्धानाय पादद्वयम्। ९, ९ त्रिकशृङ्गाख्ये सन्धिप्रवर्द्धनके, पञ्चमकटिकशेरुकया सन्धानाय। पुरस्तादन्तराले च त्रिकौष्ठम्। १० त्रिकमूलम्। ११, गुण्डिकाख्यपेश्याः प्रभवः।

**त्रिकास्थि[१] नाम**—पृष्ठवंशानुबन्धेन स्थितं श्रोणिफलकयोरन्तरालस्थं न्युब्जपृष्ठं त्रिकोणप्रायमस्थि-फलकम्—(दृश्यतां प्रथमं कङ्काल चित्रम्)। तदिदं स्थानभेदात् संहतस्वरूपं कशेरुकापञ्चकमिति सूक्ष्मदृशः (१८श चित्रे १, २, ३, ४, ५)। लिङ्गञ्चाङ्कुरत्र कशेरुपिण्डसंघातसूचकं रेखाचतुष्टयं पुरतः।

अत्रैतानि विशेषतो लक्षणीयाणि—

(१) अष्टौ पुरोवर्त्तिच्छिद्राणि (एकैकतश्चत्वारि) रेखाचतुष्टयानुबन्धेन, त्रिकपुरोगामिनीनां नाड़ीनां निर्गमाय।

(२) अष्टौ पश्चिमच्छिद्राणि (एकैकतश्चत्वारि), त्रिक पश्चिमगामिनीनां नाडीनां निर्गमाय।

१ त्रिकास्थि = Sacrum.

(३) त्रिकौष्ठं त्रिकशिरसि पुरःस्थम् । तदुभयतश्च त्रिकशृङ्गद्वयं पञ्चमकटिकशेरुकायाः सन्धिप्रवर्द्धनकाभ्यामधःस्थाभ्यां सन्धानाय ( तत्रैव ८, ८ ) ।

(४) कण्टकानि पञ्च पृष्ठतः ।

(५) उभयतश्च त्रिकपक्षौ ( १७श चित्रे ६, ६ ), श्रोणिसन्धिलक्ष्मणी तत्पार्श्वयोः श्रोणिफलकाभ्यां सन्ध्यर्थम् ( तत्रैव ७, ७ ) ।

(६) त्रिकमूलं त्रिकाधःप्रान्तरूपं तेन सन्धीयते अनुत्रिकास्थिचूड़ा ( तत्रैव १० ) । अस्यैवोभयतः त्रिकपादद्वयम् (तत्रैव ८,८) अनुत्रिकशृङ्गाभ्यां सन्धानाय ।

(७) त्रिकगुहा त्रिकाभ्यन्तरस्था, तद्द्वारञ्च पश्चिमतः "सुषुम्ना-चामर"[1]-धारणार्थम् ।

अष्टौ चात्र युग्माः पेश्यस्त्रिकास्थ्नि संलग्नाः तासु पुरस्तिस्रः पञ्च पश्चात् । तद्विवरणं पेश्यध्याये वक्ष्यते ।

# अथ अनुत्रिकास्थि ।

[ २० चित्रम् ]

अनुत्रिकास्थि ।




२०श चित्र व्याख्या—

१, १,—शृङ्गद्वयम् । म, अनुत्रिकपिण्डम् । २,२—स्नायुरज्जुसंयोगाय प्रवर्द्धनके । ३ अनुत्रिकाग्रम् ।

अनुत्रिकं[2] नाम ( २०श चित्रम् ) त्रिकास्थ्नोऽधस्तनस्त्रिकोणः काकचञ्चुप्रायोऽस्थिसंघातः, तद्धि क्षुद्रकशेरुकाचतुष्टयेन[3] मिलितेन निष्पन्नमिति सूक्ष्मदृशः । अस्योर्द्ध्वभागे शृङ्गद्वयं त्रिकास्थिमूलस्थाभ्यां पादाभ्यां सन्धिमत् (तत्रैव १, १) । मध्ये च तयोः (तत्रैव म ) सन्धिलक्ष्माङ्कितं पिण्डं त्रिकमूलस्थपिण्डेन सन्ध्यर्थम् । पार्श्वयोश्चाधः प्रवर्द्धनके ( तत्रैव २, २ ), स्नायुरज्जुसंयोगाय ।

इदञ्च गुदपश्चिमत्वात् गुदास्थीति प्राञ्चः । तदेव बह्वस्थिगुटिकामयं कल्पते गवादीनां पुच्छास्थिमालानिर्म्माणायेति प्राणितत्त्वविदः ।

पञ्च चात्र निविशन्ते पेश्यः । तत्र चतस्रो युग्माः,-एकात्वेकाकिनी । तद्विवरणं पेश्यध्याये वक्ष्यते ।

---

१ Cauda Eqnina. २ अनुत्रिकम् = Coccyx. ३ कशेरुकापञ्चकसंघातमयं वा कदाचित् । कशेरुगुटिकाश्च रेखाभिरन्तरिताः पृथगुन्नेयाः ।

# अथ श्रोणिफलकम्।

**श्रोणिफलकं**[1] नाम (२१श चित्रम्)—त्रिकनितम्ब-सक्थिधारणं बृहदस्थिफलकं कपालभूयिष्ठम्। तयोरेकैकमेकैकस्मिन् पार्श्वे तिर्य्यगवस्थितं कटिपार्श्वात् सक्थिशिरो यावत्। सन्धिश्चोभयोः पुरः परस्परं, पश्चात् त्रिकास्थिव्यवधानेन (दृश्यतां कङ्कालचित्रद्वयम्)। एवं संश्लिष्टयोश्च तयोः **श्रोणिचक्र**[2]मिति संज्ञा, तन्मध्यस्थगह्वरस्य च **वस्तिगुहे**[3]ति। सेयं वस्तिगुहा पुंसो गभीरा स्वल्पायता च, नार्य्यास्तु उत्ताना विशालायता च, निर्म्माणविशेषात् श्रोणिफलकयोः। (श्रोणिचक्रचित्रं प्रथमे कङ्कालचित्रे द्रष्टव्यम्।

यौवने पुनः सर्व्वस्यैव दृश्यते प्रतिश्रोणिफलकमस्थित्रितयं परस्परसंयुज्यमानं वंक्षणोदूखलस्थेन रेखात्रितयेन सूचितसन्धानम्। तथाच तदानीमेवं विभागः—**जघनकपालं**[4] नाम तदूर्द्ध्वतनोऽंशः विस्तृतपक्षाकारः। **कुकुन्दरास्थी**[5]ति अधस्तनोऽंशः कुकुन्दरपिण्डोपलक्षितः। **भगास्थि**[6] नाम पुरस्तनोऽंशो भगाधिष्ठानभूतः। प्रौढ़स्य तु श्रोणिफलके त्रयाणामंशानां संयोगादेकीभावो रेखात्रयविलोपश्च। तथापीह वर्णनासौकर्य्याय त्रयाणामंशानां पृथग् ग्रहणम्। (अंशत्रयञ्च २१श चित्रे रेखात्रयेण स्पष्टं सूचितम्)।

समग्रे पुनरेकैकस्मिन् श्रोणिफलके द्वयं विशेषतो लक्ष्यम्—वंक्षणोदूखलं श्रोणिगवाक्षञ्च। तत्र—

वंक्षणोदूखलं[7] नाम—श्रोणिफलकस्य बहिःपार्श्वे मध्यतः स्थितं गभीरं कोटरमुदूखलाकारम् (२१श चित्रे १,२,३,४)। तत्र सन्धीयते ऊर्व्वस्थ्नो मुण्डं स्नायुरज्जुनिबद्धं मध्यतः, कोटरपरिधौ च संसज्यते तत्सन्धिबन्धनः स्नायुकोषः। कोटरमध्यतश्च दृश्यते यौवने रेखात्रयमंशत्रयसंघातसूचकम्।

श्रोणिगवाक्षं[8] नाम भगास्थिकुकुन्दरास्थिभ्यां मण्डलीकृतमन्तरालं गवाक्षाकारम् (तत्रैव चित्रे ८)। तद् जीवद्दशायां कलावृतं, पुंसि बृहत्तरं, स्त्रियान्तु नात्यायतं त्रिकोणप्रायञ्च।

अवयव विभागात्तु पुनरेकैकस्मिन् श्रोणिफलके प्रत्यंशं विशेषाः बहवः। तत्र,

---

१ श्रोणिफलकम् = Os Innominate. २ श्रोणिचक्रम् = Pelvis. ३ वस्तिगुहा = Pelvic Cavity, ४ जघनकपालम् = Ileum. ५ कुकुन्दरास्थि = Ischium. ६ भगास्थि = Pubes. ७ वंक्षणोदूखलं वा = Acetabulum or Cotyloid Cavity. ८ Obturator foramen.

## २१श चित्रम्—

## श्रोणिफलकम् ।

( ऊर्द्धम् )

जघनकपालम्

**२१श चित्र-व्याख्या ।—**

१, २, ३, ४, वंक्षणोदूखलम् । तत्र १, भगास्थ्यंशः, २, जघनकपालांशः, ३, कुकुन्दरास्थ्यंशः, ४, अस्थ्यंशत्रयसंयोगकेन्द्रम् । ततश्च त्रिधा गता रेखा—सं, सं, सं—इति पर्य्यन्तम् । ताः सन्धानसूचनाय । ५, जघनकपालसीमा । ६, भगास्थि (उत्तरशृङ्गम्) ७, कुकुन्दरास्थि । ८, श्रोणिगवाक्षम् । ९, १० जघनकपालस्य पुरः कूटमधस्तन मूर्द्धतनञ्च ११, १२, भगास्थ्नो मुण्डम्, ( भगपीठम् वा । ) १० इत्यत ऊर्द्धाहत्या १५ पर्य्यन्तं जघनपक्षः, तद्धारा जघनधारा नाम । १३, जघनचूड़ा । १४, १५, जघनकूटं पश्चिममूर्द्धतनमधस्तनञ्च । १६, गृध्रसीद्वारम् । १७ कुकुन्दरकण्टकम् । १८, कुकुन्दरद्वारम् । १९, कुकुन्दरपिण्डम् । २०, भगास्थ्नऽधरशृङ्गम् ।




कुकुन्दरास्थि । भगास्थि ।

( अधः )

पेशी-निवेशास्तु—पे १, पे २, तिरश्चीने उदरच्छदे । पे ३, कटिप्रच्छदा । पे४, (१४ संख्योर्द्ध) गरिष्ठा नितम्बपिण्डिका । पे ५, गुण्डिका । पे ६, मध्यमा नितम्बपिण्डिका । पे ७, कनिष्ठा नितम्बपिण्डिका । रे१, पेशीप्रभव स्थान-व्यवधायिनी रेखा प्रथमा, रे२ सैव द्वितीया, रे३ सैव तृतीया । पे ८, पे९, सक्थिदण्डिका (मूलद्वयम्) । पे१०, कङ्कतिका । पे११, पे१२, उदरदण्डिका । पे१३, ऊरुसंव्यूहनी दीर्घा । पे १४, सैव ह्रस्वा । पे१५, ऊर्व्वन्तःपार्श्विका । पे१६, ऊरुसंव्यूहनी गरिष्ठा पे१७, ऊरुचतुरस्रा । पे१८, श्रोणिगवाक्षिणी बहिःस्था । पे१९ कण्डराकल्पा, ऊरुद्विशिरस्का च । पे२०, कलाकल्पा । पे२१, पे२२, यमलाद्वयम् ।

(१) **जघनकपालं** नामोर्द्धतनोऽंशः प्रधानभूतः (२१श चित्रे ८ अङ्कात् ५ अङ्कावधि ऊर्द्धावृत्त्या)। तस्य द्वौ भागौ—जघनपक्षो, वंक्षणोदूखलांशश्च। तत्र जघनपक्षो नाम पक्षवदायतो जघनकपालस्य प्रशस्तो भाग उपरितनः। तस्य द्वे तले, बाह्यमाभ्यन्तरञ्च। तयोर्बाह्यतलं जघनपृष्ठं नाम, तत्र नितम्बपिण्डिकाख्यपेशीत्रयस्य[1] प्रभवः (तत्रैव पे ४, पे ६, पे ७)। तिस्रश्च तत्र रेखास्तत्प्रभवस्थान विभाजिकाः (तत्रैव रे १, रे २, रे ३)। आभ्यन्तरतलं जघनोदरं नामेषत्खातगर्भं, तत्र कोष्ठभूमिकाख्यपेश्याः[2] प्रभवः। तदधःसीम्नि च वस्तिकुहरस्योर्द्धसीमभूता रेखा स्थूलोन्नता, सा वस्तिकण्ठिका[3] नाम। तदानुपूर्व्या च पश्चिमतः कर्णपालिसदृशाकारं त्रिकसन्धिस्थानं त्रिकस्थालकं नाम, तस्यापि पश्चात् पृष्ठवंशधरायाः कटिचतुरस्रायाश्च[4] पेश्याः प्रभवः।

जघनपक्षपरिधिभूता च धारा जघनधारा नाम। तस्याः पुरःसीम्नि द्वावुत्सेधौ पुरःकूटौ[5] नाम, तयोरूर्द्धतनाधस्तनभेदेन संज्ञाद्वयव्यवहारः। पश्चिमसीम्नि च द्वावुत्सेधौ पश्चिमकूटौ[6] नाम, तयोरपि पूर्व्ववत् संज्ञाद्वयम्। मध्ये च जघनधारायास्तुङ्गप्रदेशो जघनचूड़ा नाम। तत्पुरस्ताज्जघनधारायां तिरश्चीनयोरुदरच्छदाख्यपेश्योर्निवेशः[7]। तत्पश्चिमतश्च कटिप्रच्छदाख्यपेश्याः[8]।

पश्चिमतः पुनर्जघनपक्षस्य तोरणाकारं द्वारं गृध्रसीद्वारं[9] नाम। तेन गृध्रस्याख्यनाड्याः[10] तदनुवर्त्तिनीनां सिराधमन्यादीनां शुण्डिकाख्यपेश्याश्च[11] निर्गमः।

वंक्षणोदूखलांशस्तु जघनकपालस्य पादभूतो वंक्षणोदूखलवर्णनया वर्णितपूर्व्वः।

(२) कुकुन्दरास्थि नाम (२१श चित्रम्) नितम्बमूलाश्रयः श्रोणिफलकस्याधस्तनोऽंशः अर्द्धचन्द्रप्रायः श्रोणिगवाक्षस्य अधोऽर्द्धपरिधिभूतः। तस्य त्रयो भागाः—वंक्षणोदूखलांशः, कुकुन्दरपिण्डं, कुकुन्दरकूटञ्चेति। तत्र—

वंक्षणोदूखलांशस्तदुदूखलवर्णनादुक्तपूर्व्वः। तत्पश्चात् त्रिकोणप्रायं प्रवर्द्धनकं कुकुन्दरकण्टकं[12] नाम (२१श चित्रे १७), तत्परितो यमलाख्यपेश्याः[13] प्रभवः।

---

१ Gluteus Maximus, Medius and Minimus. २ Iliacus. ३ Ileo-pectineal Line. ४ Erector Spinæ & Quadratus Lumborum. ५ Anterior Iliac Spine—Superior and Inferior. ६ Posterior Iliac Spine—Superior and Inferior. ७ Ext. Oblique and Int. Oblique Muscles. ८ Latissimuss Dorsi. ९ Great Sacro-sciatic Notch. १० Sciatic Nerve. ११ Pyriformis. १२ Spine of Ischium. १३ Gemelli.

तदधस्तात् क्षुद्रतोरणाकारं खातं कुकुन्दरद्वारम्[1] (२१श चित्रे १८) नाम, तेन अन्तःस्थायाः श्रोणिगवाक्षिणी[2] पेश्याः तदनुचरीणां सिराधमनीनाड़ीनाञ्च वस्तिगुहायां प्रवेशः ।

कुकुन्दरपिण्डं[3] (२१श चित्रे १८) स्वनामव्याख्यातमुपविशतः पुरुषस्य भारधारणमूलम् । तत्र ऊरुजानुगामिनीनां चतसृणां पेशीनां प्रभवः ।

कुकुन्दरकूटं[4] नाम कुकुन्दरपिण्डादूर्द्धं पुरःसङ्गतं शृङ्गं भगास्थ्नोऽधरशृङ्गेण मिलितं श्रोणिगवाक्षपरिधेरंशभूतम् (तत्रैव १६ इत्यतः २० पर्य्यन्तम्)। तद्बहिःप्रदेशो बहिःस्थायाःश्रोणिगवाक्षिण्याः, (तत्रैव पे १८) गरिष्ठाया ऊरुसंव्यूहिन्याश्च[6] पेश्याः (तत्रैव पे १६) प्रभवः । तदन्तःप्रदेशस्तु अन्तःस्थायाः श्रोणिगवाक्षिण्याः ।

(३) भगास्थि नाम भगाद्यधिष्ठानभूतः श्रोणिफलकस्य पुरस्तनोऽंशः (२१शचित्रम्)। तस्य त्रयो भागाः—मुण्डमुत्तरशृङ्गमधरशृङ्गञ्च ।

तत्र मध्यपिण्डभूतं मुण्डं[7], क्वचिद्भगपीठं लिङ्गपीठमिति वा व्यपदिष्टम् (तत्रैव ११, १२)। अन्तःसीम्नि च तस्य इतर भगास्थिसन्धानाय स्थालकमुच्चावचं, पुरश्च उत्सेधे उदरदण्डिका[8]ख्यपेश्या (तत्रैव पे ११, पे २२) निवेशः तत् परितश्च स्नायूनाम् ।

उत्तरशृङ्गं[9] (तत्रैव ६) मुण्डात् पश्चिमतो वंक्षणोदूखलं प्राप्तं परार्द्धेन तदंशनिष्पादकञ्च । तदेव श्रोणिगवाक्षस्य ऊर्द्ध्वपरिधिभूतञ्च, तदूर्द्ध्वसीमा चाभ्यन्तरतलस्थवस्तिकण्ठिकाख्यरेखया सङ्गता वस्तिगुहाया ऊर्द्ध्वसीमभूता ।

अधरशृङ्गं[10] (तत्रैव २०) पुनर्भगास्थिमुण्डादधो बहिर्गत्य कुकुन्दरकूटेन सङ्गतं श्रोणिगवाक्षस्य पुरःपरिधिभूतम् । अस्य बहिस्तले ऊरुसंव्यूहन्य[11]ाख्य-पेशीत्रयस्य, बाह्यायाः श्रोणिगवाक्षिण्याख्यपेश्याश्च प्रभवः, अन्तःप्रदेशे तु अन्तःस्थायाः श्रोणिगवाक्षिण्याख्यपेश्याः । पुरोवर्त्तिधारायाञ्चास्य शिश्नप्रहर्षण्य[12]ाख्यपेश्याः शिश्नमूलादेश्च संयोगः ।

तदेतत् सावयवं श्रोणिफलकं समासतो व्याख्यातम् । तत् सूक्ष्मानुसूक्ष्मविशेषास्तु चित्रादिषु स्नायुपेशीवर्णनावसरे च परिज्ञेयाः ।

---

१ Lesser Sacro-Sciatic Notch. २ Obturator Internus. ३ Tuberosity of Ischium. ४ Ascending Ramus of Ischium. ५ Obturator Externus. ६ Adductor Magnus. ७ Body of Pubes. ८ Rectus Abdominis, ९ Ascending Ramus of Pubes. १० Descending Ramus of Pubes. ११ Adductor Magnus, Longus & Brevis. १२ Erector Penis.

# अथ अंसफलकम् ।

अंसफलकं[1] नाम (२२श चित्रम्) त्रिकोणप्रायं पत्त्रवदायतमस्थिफलकं कपालभूयिष्ठमेकमेकैकतः अंसपृष्ठे। तच्च तिर्य्यगवस्थितं संछाद्य पृष्ठार्द्धमा सप्तमपर्शुकामूलात्। सन्धीयते चैतत् बहिःसीम्न्येव पुरस्तात् अक्षकप्रगण्डास्थिभ्याम्, विपरिवर्त्तते च स्वच्छन्दमन्तःसीम्नि पश्चिमतः पेशीमात्रप्रतिबद्धम्।

अक्षकसंहितस्य चांसफलकस्य **अंसचक्र**[2]मिति संज्ञा। एकैकञ्चांसचक्रमेकैकतः अंससन्धेरुपरि पटल[3]भूतं सन्धिसंरक्षणाय पेशीस्नायुसंयोजनाय च। (दृश्यतां प्रथमकङ्कालचित्रम्)।

एकैकस्य पुनरंसफलकस्य पञ्च भागाः—अंसप्राचीरकम्, अंसकूटम्, अंसतुण्डम्, अंसपीठम्, अंसकपालिका चेति। तत्र—

अंसप्राचीरकं[4] नाम (२२श चित्रे १—६) अंसकपालिकापृष्ठात्तिर्य्यक् समुद्गतं बहिर्मुखमस्थिफलकं खड्गसदृशाकारम् त्वगधोऽनुभवनीयम्। तेनांसकपालिकापृष्ठतलस्य द्विधा विभागः। भागद्वयस्य चांसपृष्ठमुत्तरमधरञ्चे[5]ति संज्ञे।

अंसकूटं[6] नाम (तत्रैव १) अंसप्राचीरकस्याग्रं सर्पफणायतमुन्नावनञ्च, तत्र सम्बध्यते अंसतुण्डसंयोजनी[7] स्नायुः। प्रभवश्च तदंसच्छदायाः पृष्ठप्रच्छदायाश्च[8] पेश्याः (तत्रैव पे १, पे २)।

अंसतुण्डं[9] नाम (२२श चित्रे २) अंसफलकस्य चूड़ायां हंसतुण्डाकारं बहिर्मुखं प्रवर्द्धनकम्। अग्रे चास्य पृष्ठतो द्विशिरस्का[10]याः काकोष्ठिका[11]याश्च पेश्याः प्रभवः (तत्रैव मे ३), पुरश्च लघ्व्या उरःप्रच्छदा[12]ख्यपेश्याः। सम्बध्येते चात्र तुण्डाक्षकसंयोजनी[13], तुण्डांसकसंयोजनी[14] च स्नायू (तत्रैव ३—इत्यत्र)।

---

१ अंसफलकम्=Scapula. प्राचां सम्मतेयं संज्ञा (च० शा० ७ अ०)। २ अंसचक्रम्=Shoulder-girdle. ३ पटलं छदिः (Roof). ४ Spine of Scapula. ५ Supraspinous & Infraspinous fossæ ६ Acromion process. ७ Coraco-acromial ligament. ८ Deltoid & Trapazeus. ९ Coracoid process. १० Biceps. ११ Coraco-brachialis. १२ Pectoralis Minor. १३ Coraco-clavicular Ligament. १४ Coraco-acromial Ligament.

[ २२श चित्रम् ]

## अंसफलकं ( वामम् )




**२२श चित्र-व्याख्या**—१ अङ्कात् ६ पर्य्यन्तम्—अंसप्राचीरकम्। १, अंसकूटम्। २, अंसतुण्डम्। ३, अंसाक्षकसंयोजन्या तुण्डांसक-संयोजन्याश्च स्नायोः प्रभवः। ४, अंसशिरःकोटरम्। ५, अन्तःकोटिः। ६, अंसप्राचीरमूलदेशः। अत्र च विपरिवर्त्तते पृष्ठप्रच्छदाख्या पेशी श्लेष्मधरकलापुटकव्यवधानेन। ७, अधःकोटिः। ८, बहिःकोटिस्थं स्थालकमंसपीठं नाम।

अत्र चैता निविशन्ते पेश्यः—पे १, अंसच्छदा। पे २, पृष्ठप्रच्छदा। पे ३, द्विशिरस्काया ह्रस्वमूलं, काकोष्ठिका च। पे ४, द्विशिरस्काया दीर्घमूलम्। पे ५, अंसपृष्ठिका उत्तरा। पे ६, सैव अधरा। पे ७, अंसोन्नमनी। पे ८, अंसापकर्षणी लघ्वी। पे ९, सैव बृहती। पे १०, अंसाधरिका बृहती। पे ११, सैव लघ्वी। पे १२, त्रिशिरस्का।

अंसपीठं[1] नाम (२२श चित्रे ८) अंसकूटादधःस्थमंसफलकस्य बहिःकोटिस्थितं स्थालकं, तत्र सन्धीयते प्रगण्डास्थ्नो मुण्डं तत्परिधिसंयुक्तेन स्नायुकोषेण प्रतिबद्धम्। तदूर्द्ध्वसीम्नि संयुज्यते द्विशिरस्काख्यपेश्या[2] दीर्घमूलम् (तत्रैव पे४), तदधःसीम्नि च त्रिशिरस्काख्यपेश्या[3] मूलम् (तत्रैव पे १२)।

अंसकपालिका[4] नाम (२२श चित्रे त्रिकोणावृत्त्या ८—७—५) अंसफलकस्य प्रधानोऽशस्त्रिकोणकपालिकाकारः। तस्य द्वे तले, पुरस्तलं पश्चिमतलञ्च। तत्र पुरस्तलमंसान्तरिकाख्य-पेश्याः[5] प्रभवः। पश्चिमतलं पुनरंसप्राचीरकेण भागद्वयविभक्तम्; तत्रोर्द्ध्वतनो भाग उत्तराया अंसपृष्ठिकाख्य पेश्याः[6] (तत्रैव पे ५) प्रभवः, अधोभागस्तस्या एवाधराया: (तत्रैव पे ६)। तिस्रश्चांसकपालिकाया धारास्तावत्यश्च कोट्यः[8][9]। तत्र उर्द्ध्वधारा, अन्तर्धारा, बहिर्धारा चेति तिस्रो धाराः क्रमेण ऊर्द्ध्वान्तर्बहिःसीमरूपाः। बहिःकोटिरन्तःकोटिरधःकोटिश्चेति तिस्रः कोट्यस्तत्तत्कोणरूपाः (तत्रैव ८, ५, ७)। तत्र बहिःकोटिरंसपीठे परिणता, अन्यत् कोटिद्वयं त्वगधोऽनुभवनीयम्।

तत्र ऊर्द्ध्वधारायाम् (२२श चित्रे ४—५) अंसतुण्डमूले कोटरम् अंसशिरःकोटरं[10] नाम (तत्रैव ४)। द्वारञ्च तदंसारोहिण्या[11] नाड्याः पृष्ठतो निर्गमाय। बहिर्धारा तावदंसकपालिकाया बहिःसीमा (तत्रैव ८—७), कक्षायाः पश्चिमसीमभूता च, सेयं कक्षानुगा[12] नाम धारा। प्रभवश्चासौ पुरस्तादंसपीठाधःप्रदेशेन त्रिशिरस्काख्यपेश्याः, तदधश्च अंसाधरिकायां[13] लघ्व्या बृहत्याश्च (तत्रैव पे १२, पे ११, पे १०)। अन्तर्धारा पुनः (तत्रैव ५—७) धनुर्वक्रा पृष्ठवंशमनुगता च, सेयं वंशानुगा[14] नाम। प्रभवश्चासौ पुरस्तादरित्राख्यपेश्याः[15], पश्चिमतश्च अंसोन्नमन्याः[16], अंसापकर्षण्या[17] लघ्व्या बृहत्याश्च (तत्रैव पे ७, ८, ९)।

---

१ Glenoid Cavity. २ Long Head of Biceps. ३ Triceps. ४ Dorsum of Scapula. ५ Sub-scapularis. ६ Supraspinatus. ७ Infraspinatus. ८ Borders. ९ Angles. १० Suprascapular Notch. ११ Suprascapular Nerve. १२ Axillary border. १३ Teres Minor & Major. १४ Vertebral border. १५ Serratus Magnus. १६ Levator Angulæ Scapulæ. १७ Rhomboideus Minor & Major.

# अथ अक्षकास्थि ।

अक्षकं[1] नाम अंसमूलादुरःफलकसङ्गतं धनुर्वक्रं नलकास्थि, एकमेकैकतः । तदेव 'जत्रु' संज्ञमिति प्राञ्चः । सन्धीयते च तद् अन्तःसीम्नि उरःफलकेन, बहिश्चांसकूटेन[2] । अंसफलकसहितस्य च तस्य संहितस्य अंसचक्रसंज्ञेति प्रागवोचाम ।

इतरनलकास्थिवदस्यापि त्रयो भागाः—द्वौ प्रान्तौ मध्यनलकञ्चेति । अस्य च कङ्काले परिघवदवस्थान-दर्शनात् ( दृश्यतां प्रथमं कङ्कालचित्रम् ), प्रान्तद्वयस्य अन्तःप्रान्तो बहिःप्रान्तश्चेति संज्ञाद्वयम् । तत्र—

## [ २३श चित्रम्—अक्षकास्थि ( वामम् ) ]

[ सम्मुखतो दृष्टम् ]

ऊर्द्धतलम्




अधस्तलम् ।

**२३श चित्र व्याख्या**—चित्रद्वये ऊर्द्धतनं चित्रम् ऊर्द्धतलस्य दृश्यम्, अधस्तनमधस्तलस्य । तत्र १, अन्तःप्रान्तः ( उरःफलकाभिमुखः ) । २, बहिःप्रान्तः ( अंसाभिमुखः ) । ३, त्रिकोणिकाख्यस्नायुसंयोगार्थमर्व्वुदम् । ४, तिरश्चीना रेखा चतुरस्रिकाख्यस्नायुसंयोगाय । ५, अंसकूटेन सन्ध्यर्थं लाञ्छनम् । ६, पर्शुकाचकसंयोजन्याः स्नायोः संयोगाय बन्धुरः प्रदेशः । ७, प्रथमोपपर्शुकोपरिभागेन सन्ध्यर्थं लाञ्छनम् । पेशीनिवेशास्तु—पे १, उरःकर्णमूलिका । पे २, उरःप्रच्छदा गुर्व्वी । पे ३, अक्षकाधरा । पे ४, अंसच्छदा । पे ५, पृष्ठप्रच्छदा । पे ६, उरो-जिह्वामूलिका ।

---

१ अक्षकं = Clavicle. २ अंसकूटं नाम अंसफलकस्यैवतुङ्गभाग इत्युक्तपूर्व्वम् ।

अन्तःप्रान्ते द्वे सन्धिलाञ्छने। तयोरुपरितनमुरःफलकपार्श्वस्थेन, अधस्तनं (२३श चित्रे ७) प्रथमाया उपपर्शुकायाः शीर्षभागेन सन्धानाय। अधस्तले चास्य बन्धुरः प्रदेशः पर्शुकाचक्षकसंयोजन्याः[1] स्नायोः संयोगाय ( तत्रैव ६ )।

बहिःप्रान्ते पुनरेकं सन्धिलक्ष्म, तद् अंसकूटेन सन्ध्यर्थम् ( तत्रैव ५ )। संयुज्यते चात्र अंसाचक्षकसंयोजनो[2] स्नायुः ।

मध्यनलकं पुनर्द्वेधा धनुर्वक्रं, बहिरर्द्धे उत्तानमन्तरर्द्धे च न्युब्जम् पुरस्तात् । अन्तरर्द्धश्चास्य दण्डवद्वृत्तपरिणाहः, बहिरर्द्धस्तु चिपिटायतः । तत्र बहिरर्द्धस्याधस्तलमर्ब्बुदोपलक्षितं त्रिकोणिका[3]ख्यस्नायुसंयोगाय (२३श चित्रे ३)। अर्ब्बुदादुद्गता च तिरश्चीना रेखा ( तत्रैव ४ ) चतुरस्रिका[4]ख्यस्नायुसंयोगाय। बहिरर्द्धस्यायमूर्द्धतलेऽंसच्छदायाः[5] पृष्ठप्रच्छदायाश्च[6] पेश्याः प्रभवः ( २३श चित्रे पे ४, पे ५ ), अधस्तले च अक्षकाधरीयायाः[7] पेश्याः ( तत्रैव पे ३ )।

अन्तरर्द्धः पुनः प्रभवस्त्रिसृणां पेशीनां क्रमेण उरः-कर्णमूलिकायाः[8], गुर्व्या उरःप्रच्छदायाः[9], उरोजिह्वामूलिकायाश्च[10] ( २३श चित्रे पे १, पे २, पे ६ )।

## अथ उरःफलकम् ।

उरःफलकं[11] नाम ( २४श चित्रम् ) फलकाकारमस्थिखण्डमुरोमध्यतः पुरस्तात् ( दृश्यतां प्रथमकङ्कालचित्रम् )। तच्च खण्डत्रयसंयोगजं खण्डषट्कसंयोगजं वा मध्यफलकस्य चतुःखण्डात्मकत्वात्। तत्र प्रथमं खण्डं शिखरस्थं षट्कोणं, द्वितीयं मध्यस्थं फलकाकारं, तृतीयमधःप्रान्तस्थं त्रिकोणं प्रथमे वयसि तरुणास्थिमयम्। खण्डत्रयात्मकस्य चास्य उभयतः संयुज्यन्ते तरुणास्थीनि पर्शुकासंयोजकानि उपपर्शुकाख्यानि ।

तत्र प्रथमं खण्डं कण्ठमूलेऽवस्थितं ग्रैवेयकं[12] नाम ( तत्रैव १म )। तत्र षट् स्थालकानि तद्यथा—द्वे स्थालके अक्षकाभ्यां सन्धानाय (तत्रैव अं० सं०), द्वे प्रथमाभ्यामुपपर्शुकाभ्यां, द्वे च द्वितीयाभ्याम्। शिखरे चास्य खातं कण्ठकूपं[12] नाम ( तत्रैव क )।

निम्नतश्चास्य द्वितीयखण्डेन संयोगः। निविशते चात्र पुरस्तादुरःकर्णमूलिकाख्या पेशी ( तत्रैव पे १ ), पृष्ठतश्च उरोजिह्वामूलिका।

१ Costo-clavicular Ligament. २ Acromio-clavicular Ligament. ३ Conoid Ligament. ४ Trapezoid Ligament- स्नायुद्वयमेतत् श्रेणीक्रमसंतुण्डाचक्षसंयोजनमिति स्नायुध्याये वक्ष्यते। ५ Deltoid. ६ Trapezium. ७ Subclavius. ८ Sterno-mastoid. ९ Pectoralis Major. १० Sternohyoid. ११ Sternum. १२ Manubrium.

[ २४श चित्रम् ]

## [ उर:फलकमुपपर्शुकाश्च ]




## २४श चित्र व्याख्या।

१म, २य, ३य,—उर:फलकम्। तत्र १म, प्रथमखण्डं ग्रैवेयकं नाम। २य, द्वितीयखण्डं मध्यफलकं नाम। ३य, तृतीयखण्डमग्रपत्रं नाम। १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२—पर्शुकाग्राणि उपपर्शुकासहितानि। दक्षिणतस्तु केवलमुपपर्शुका: पृथग् दर्शिता:। अं० सं०, अक्षकसन्धिस्थलम्। क, कण्ठकूपम्। पेशी निवेशास्तु पे १,—उर:कर्णमूलिका। पे २, अक्षकाधरा। पे ३, उर:प्रच्छदा गुर्वी। पे ४, उर:प्रच्छदा लघ्वी।

मध्यफलकं[1] नाम द्वितीयं खण्डमुरःफलकस्य उपरिष्टाद् ग्रैवेयकेन संहितम् (२४श चित्रे ३य)। तच्च खण्डचतुष्टयसंघातजं, खण्डचतुष्टयस्य बाल्ये पृथगवस्थानात्। षट् चात्र एकैकतः स्थालकानि उपपर्शुकाभिः सन्धानाय। पुरस्तलं च ग्रैवेयक-मध्यफलकयोः गुर्व्या उरःप्रच्छदाख्यापेश्याः[2] प्रभवः, वामार्द्धे वामायाः दक्षिणार्द्धे च दक्षिणायाः (तत्रैव पे ३)।

अग्रपत्रं[3] नाम तरुणास्थिभूयिष्ठं तृतीयं खण्डमुपरिष्टान्मध्यफलकेन संयुक्तम् (२४श चित्रे ३य)। तदेतद् यकृद्विवृद्धौ समुन्नताग्रं दृश्यते, संयुज्यते च तत्र पुरस्तात् समाया उदरच्छदाख्यं[4] पेश्या मध्यकण्डरा, पश्चिमतश्च महाप्राचीराया[5] अग्रभागः। वार्द्धके चास्य सर्व्वथा कठिनीभावः।

## अथ पर्शुकाः।

पर्शुकाः पार्श्वकानि वा[6] नाम उरःपञ्जरवृतिभूतानि[7] धनुर्वक्राणि स्थितिस्थापकानि चास्थिफलकानि। तेषां द्वादश एकैकस्मिन् पार्श्वे इति चतुर्व्विंशतिः पर्शुकाः। ताः सर्व्वा एव पश्चिमतः पृष्ठकशेरुकापिण्डैः पुरश्च तरुणास्थिभिरुपपर्शुकाख्यैः संहिताः। तासां सप्त ऊर्द्धतन्यः क्रमेणाधोऽधः दीर्घतराः, पुरस्तादुपपर्शुकाभिः स्वीयाभिरुरःफलकेन प्रतिबद्धाः। ता एताः मुख्या[8] नाम, ताभिरेव मुख्यतया उरःपञ्जरनिर्म्माणात्। अधस्तन्यः पुनः पञ्च पर्शुकाः क्रमेणाधोऽधः ह्रस्वतराः, असम्बद्धाश्चोरःफलकेन। ताः गौण्यो[9] नाम। तासामपि षष्ठमी नवमी दशमी चेति तिस्रः स्वैः स्वैरुपपर्शुकाग्रैर्यथापूर्व्वमुपपर्शुकाभिरेव सम्बद्धाः, एकादशी द्वादशी चेति द्वे सर्व्वथा विमुक्ताग्रे[10]।

---

१ Gladiolus. २ Pectoralis Major. ३ Xiphiod or Ensiform. ४ Transveralis Abdominis. ५ Diaphragm. ६ Ribs. ७ उरःपञ्जरमुरोगुहाधारभूतं पञ्जराकारं वक्ष्यमाणम्। तस्य वृतिभूतानि वेष्टनभूतानि। ८ मुख्याः पर्शुकाः = True Ribs. ९ गौण्यः = False ribs. १० Floating Ribs.

[२५श चित्रम्—पर्शुका]




इयञ्च षष्ठी सप्तमी वा पर्शुका। १, मुण्डस्थं द्विधा विभक्तं स्थालकम्। २, अर्व्वुदम्। क, पर्शुकाकोणः। ग, ग्रीवा। प, पर्शुकानुगा परिखा, तदाख्य सिराधमनीनाड़ीधारणाय। ३, ४, परिखायास्तटद्वयमूर्द्ध्वतनमधस्तनञ्च, पर्शुकान्तरिकाख्यपेशीद्वयसंयोगाय। ५, अग्रकोटिस्थं खातमुपपर्शुकासंयोगाय।

अथ षडिमानि प्रतिपर्शुकं लक्षणीयानि साधारणलिङ्गानि—मुण्डमर्व्वुदं ग्रीवा कोणः काण्डमग्रकोटिश्चेति। तत्र—

मुण्ड[१] नाम पर्शुकायाः पश्चिमप्रान्तो वर्त्तुलाकारः। तत्र च युग्मं स्थालकं[२] (२५श चित्रे १) पृष्ठकशेरुकाद्वय-पिण्डस्थाभ्यामर्द्धस्थालकाभ्यां सन्धानाय।

अर्व्वुदं[३] नाम (२५श चित्रे २) तत् समीपस्थं पिण्डं स्थालकाङ्कितम्। तस्य कशेरुबाहुस्थेन स्थालकेन सन्धिः।

ग्रीवा[४] नाम (२५श चित्रे ग) मुण्डार्व्वुदयोर्मध्यभागः।

कोणो[५] नाम (२५श चित्रे क) अर्व्वुदपुरोवर्त्ती कोणाकारः प्रदेशः। तत्र दृश्यते भग्नसंहितमिव पर्शुकाकाण्डम्।

काण्डं[६] नाम धनुर्वक्रः पर्शुकामध्यभागः। तस्य द्वे धारे ऊर्द्ध्वधारा अधोधारा चेति। तत्र अधोधारायां परिखा (२५श चित्रे प) पर्शुकानुगाख्या[७] तदाख्य सिराधमनीनाड़ीनांधारणाय। अस्याश्च तटद्वये (तत्रैव ३, ४) संयुज्यते पर्शुकान्तरिकाख्यं[८] पेशीद्वयम्।

अग्रकोटिर्नाम[९] (२५श चित्रे ५) पुरःप्रान्तः उपपर्शुकासंयोगाय उच्चावचखातयुतः।

तान्येतानि साधारणलिङ्गानि तृतीयादि-नवम्यन्तपर्शुकासु यथोक्तानि। प्रथम-द्वितीय-दशमैकादशद्वादशसंख्यासु तु तद्वैलक्षण्यमन्ये च विशेषाः। तद्यथा—

---

१ Head. २ Circular facet or Socket. ३ Tuberosity. ४ Neck. ५ Angle. ६ Shaft. ७ Groove for Intercostal Vessels and Nerves. ८ Intercostal Muscles,—External & Internal. ९ Sternal end.

## [ २६श चित्रम् । विशिष्टपर्शुकाः । ]




प्रथमा पर्शुका ह्रस्वतमा दात्रफलकाकारा[1] च। अस्या मुण्डं क्षुद्रमेकस्थालकञ्च। काण्डमायतमूर्द्ध्वाधस्तलोपलक्षितञ्च। कोणस्तु नास्त्येव। ऊर्द्ध्वतले च खातद्वयमक्षाधरिकाख्यंसिरा-[2]धमन्योर्धारणाय ( २६श चित्रे १, २ )। तिस्रश्चात्र निविशन्ते पेश्यः क्रमेण अरित्नौ[3], पर्शुकाकर्षणी पुरोगा मध्यमा[4] चेति।

द्वितीया पर्शुका प्रथमावदेव दीर्घतरा च। तदूर्द्ध्वतले निविशते पेशीद्वयम् -- पर्शुकाकर्षणी पृष्ठगा, अरित्ना चेति।

२६श चित्र-व्याख्या —

(१म)—प्रथमा पर्शुका। (२य)—द्वितीया। (१०म)—दशमी। (११श)—एकादशी। (१२)—द्वादशी। तत्र अ, अर्व्वुदम्। क, कोणः। सं, मुण्डस्थं स्थालकम्। विशेषतस्तु प्रथमायां—१, २, अक्षाधरिकाख्यसिराधमन्योर्धारणार्थं खातद्वयम्। पेशीनिवेशास्तु—प्रथमायां पे१, पर्शुकाकर्षणी मध्यमा। पे २, अरित्ना। पे ३, पर्शुकाकर्षणी पुरोगा। द्वितीयायां—पे १, पर्शुकाकर्षणी पृष्ठगा। पे २, ३, अरित्नायाः मुखद्वयम्।

दशमी पर्शुका ह्रस्वा वड़िशाकारा च। अस्या अपि मुण्डमेकस्थालकं. कोणस्तु काण्डमध्यस्थः। एकादश्यामप्येवमर्व्वुदाभावश्च। द्वादशी एकादशीवत्। तत्र कोणाभावश्च। ता एताश्चतुर्व्विंशतिः पर्शुका व्याख्याताः।

**उपपर्शुकाः** पुनः (२४शे चित्रे स्पष्टम्) पर्शुकावदेव संख्यया, पर्शुकाग्रसम्बद्धास्तरुणास्थिमय्यश्च। तासामुरोऽस्थिषु ग्रहणं प्राचां ग्रन्थेषु[6]।

---

१ दात्रं शस्यकर्त्तनी ( Sickle ). २ Subclavian Vein & Artery. ३ Serratus Magnus. ४ Scalenus Anticus & Medius. ५ Scalenus Posticus. ६ प्राचां समाधानमुपोद्घाते द्रष्टव्यम्।

## अथ उरःपञ्जरम्।

उरःपञ्जरं[1] नाम उरोगुहाधारणं पञ्जरमस्थिमयम् (दृश्यतां कङ्कालचित्रद्वयं तृतीयाध्याये)। निर्मीयते च तत् पश्चिमतः पृष्ठवंशेन, पार्श्वयोः पर्शुकाभिः, पुरस्तोरःफलकेनोपपर्शुकासहितेन। तच्चोपरिष्टादसंवृतमधस्तान्महाप्राचीराख्यपेश्या संवृतं पार्श्वयोरायतञ्च क्रमादधोऽधः। धार्य्यते च तेन तथासंवृतेन, फुस्फुसद्वयं श्वासपथसहितं, हृदयं स्थूलमहासिराधमन्यादिसहितमन्नपथश्च। तद्विवरणं यथास्थानं वक्ष्यामः।

इति द्वितीयो मध्यकायास्थिविज्ञानीयः परिच्छेदः।

## अथ तृतीयः शिरोऽस्थिविज्ञानीयः परिच्छेदः।

इह खलु षड़ङ्गेऽस्मिन् शरीरे सर्व्वेन्द्रियज्ञानप्राणायतनमुत्तमाङ्गं शिरस्तत्र चाष्टाविंशतिरस्थ्नामित्युक्तपूर्वम्। तच्च संहितमधस्तात् पृष्ठवंशेन धारणदण्डभूतेन।

शिरोऽस्थीनि चाष्टौ शिरःसम्पुटनिर्म्मापकानि चतुर्दश च मुखमण्डलस्थानीति द्वाविंशतिरत्र व्याख्येया।

## अथ शिरःसम्पुटास्थीनि।

शिरःसम्पुटं[2] नाम साङ्गोपाङ्गमस्तिष्काधारभूतमस्थिसम्पुटमलाव्वर्द्धसदृशाकारम्। तस्य चाधःसीमाद्योतकं चक्रमीदृशम् – (२७श चित्रे स्पष्टम्)

भ्रुवौ चेत् कर्णमूलाभ्यां पश्चात् केशान्तसंगते।
तदासौ सूच्यते सीमा शिरःसम्पुटनिम्नगा॥

---

१ Throax. २ शिरःसम्पुटम् = Cranium.

## [ २७श चित्रम्—करोटिः ]

( तत्र शिरःसम्पुटविभागः अक्षरैर्दर्शितः )




**२७श चित्र व्याख्या** - १, १, पुरःकपालम्। २, २, पार्श्व कपालम्। ३, ३, पश्चात्कपालम्। ४, ४, शङ्खास्थि (युग्माङ्काः सीमाद्योतनार्थाः)। ५, तस्यैव गोस्तनांशः। ६, ६, गण्डास्थि। रे १, शङ्खतोरणिका उत्तरा ( रेखा )। रे २, शङ्खतोरणिका अधरा। मध्ये शङ्खच्छदपेश्याः प्रभवः।

शिरःसम्पुटनिर्म्मापकानि चाष्टावस्थीनि यथा—पुरःकपालं पश्चात्कपालं पार्श्वकपाले द्वे चेति चत्वारि शिरःकपालानि; द्वे शङ्खास्थिनी कर्णमूलसंसक्ते; जतूका झर्झरकं चेति द्वे शिरःसम्पुटभूमिभूते—इति। तत्र षड़ादिमानि स्फुटं बहिर्दृश्यानि, जतूकादिद्वयं तु नासाकण्ठादिच्छदिभूतं निगूढ़शरीरम्।

समग्रकरोटिदृश्या विशेषास्तु इहैव शेषतो वक्ष्यन्ते।

## अथ पश्चात्कपालम्।

चतुर्षु तावदिह शिरःकपालेषु पश्चिमकपालं[१] आदौ वर्णनीयम्, तद्धि मूलबन्धनं शिरसः पृष्ठवंशचूड़ासंहितमिति।

---

१ पश्चिमकपालम् = Occipital Bone.

तस्य च द्वौ भागौ, कपालभागो मूलभागश्चेति। तत्र कपालभागः सर्पफणायत ऊर्द्ध्वस्थः। मूलभागः सर्पग्रीवासदृशः अधःस्थः। संयोगे चानयोर्महाविवरं[१] वृत्तप्रायं सशीर्षकसुषुम्नानिर्गमाय। ( २८श-२९श चित्रयोः स्पष्टम् )

[ २८श चित्रम्—पश्चात्कपालं ( पुरस्तलम् ) ]




मूलपिण्डकम्
( जतूकास्थ्ना सन्धेयम् )

**२८श चित्र व्याख्या**—१, महावर्त्तः। २, २, पार्श्वकोणौ। २—१—२ पार्श्विकाख्या सिरापरिखा। ३, पुरोधारायाः मध्यबिन्दुः। ३—१—४ दीर्घिकाख्या सिरापरिखा। ५, ५, कलायकद्वयं स्नायुसंयोगाय। ६, ६, मन्याप्रवर्द्धनके। ७, ७, मन्याखाते। क, परिखातटयोः कलासंयोगसूचकं रेखाद्वयम्।

भागद्वयोपलक्षितस्य च पश्चिमकपालस्य स्फुटं तलद्वयं, पुरस्तलं पृष्ठतलञ्चेति। तत्र—

**पुरस्तलं शिरःसम्पुटाभ्यन्तरस्थम्। ( २८श चित्रम् )**

---

१ Foramen Magnum.

तच्च कपालभागस्य, कोरोदरं तत्राधीयते मस्तिष्कपश्चार्द्धः अनुमस्तिष्कञ्च (२८श चित्रे म म, अम-अम)। गभीरञ्च तत्र सिरापरिखाचतुष्टयं[1] स्वस्तिकाकारं, स्वस्तिकमध्ये च तत्केन्द्रभूतः प्रदेशो महावर्त्तो[2] नाम (तत्रैव १)। सिरापरिखातटेषु च संयुज्यन्ते मस्तिष्कावरणाख्यकलायाः खण्डविशेषाः[3] (यथा तत्रैव क)।

मूलभागस्य[4] तु (२८श चित्रम्) पुरस्तलमीषत्खातप्रायम्,—तत्राधीयते सुषुम्नाशीर्षकम्[5]। कपालमूलभागयोश्च संयोगस्थले उभयतः अर्द्धचन्द्राकारे खाते मन्याखाते[6] नाम, (तत्रैव ७, ७) ते अनुमन्याख्यस्थूलसिराधारणाय[7]। तदुपकण्ठस्थे च प्रवर्द्धनके मन्याप्रवर्द्धनके[8] नाम (२८श चित्रे ६, ६)।

धारा पुनः कपालभागस्यातिदन्तुरा (२८श चित्रे स्फुटं दृश्या); तस्यामुभयतो मध्यवर्त्तिनौ कोणौ पार्श्वकोणौ[9] नाम (तत्रैव २, २)। तयोरूर्द्धतनो धारार्द्धः पार्श्वकपालयोः पश्चिमधाराभ्यां सन्धेयः, तयोरधस्तनौ तु धारांशौ उभयतः शङ्खास्थिभ्याम् सन्धेयौ, मध्ये च तयोर्मूलपिण्डं जतूकास्थिसंयोगि।

पृष्ठतलं पुनः पश्चिमकपालस्य शिरःसम्पुटबहिःस्थम्। तत्र—

---

१ Two Longitudinal and Two Lateral Sinuses. २ Torcular . Herophilii. ३ Falx Cerebri and Tentorium Cerebelli. ४ मूलभागः = Basilar Portion. ५ सुषुम्नाशीर्षकम् = Medulla Oblongata. ६ Jugular Fossæ. ७ Jugular Veins. ८ Jugular Processes. ९ Lateral Angles.

## [ २९श चित्रम्—पश्चिमकपालं ( पृष्ठतलम् ) ] ।




**२९श चित्र व्याख्या**—१, १, पृष्ठतलस्य न्युब्जमध्यभागः शिरश्छदाख्यपेश्या संवृतः। २, पश्चिमार्बुदम्। ३, ३, कलायकद्वयं स्नायुसंयोगि। ४, ४, मूलकोटिपश्चिमगं रन्ध्रद्वयम्। ५, ५, मूलकोटिद्वयम्। ६, ६, तत्पुरोगं रन्ध्रद्वयम्। ७, ७, मन्याप्रवर्द्धनके ; ८ मूलपिण्डम्। रे १, उत्तरतोरणिका। रे २, अधरतोरणिका। रे ३, पश्चिमालिका। पेशीनिवेशास्तु—पे १, पृष्ठप्रच्छदा। पे २, शिरश्छदा। पे ३, उरःकर्णमूलिका। पे ४, शिरोग्रीवविवर्त्तनी। पे ५, शिरोग्रीवपृष्ठिका। पे ६, उत्तरतिरश्चीना। पे ७, पे, ८, शिरःपृष्ठदण्डिका गुर्व्वी, लघ्वी च। पे ९, सैव पार्श्वगा। पे १०, पे ११ शिरःपूर्व्वदण्डिका लघ्वी गुर्व्वी च। पे १२, उत्तरा कण्ठसंकोचनी।

कपालभागस्य पृष्ठतलं कूर्म्मपृष्ठाकारं उपरिष्टात् ( २९श चित्रे १, १ ) शिरश्छदाख्यपेशीसंवृतञ्च। तस्य मध्यत उत्सेधः पश्चिमार्बुदं[1] नाम (तत्रैव २ ), तदानुपूर्व्या चाधोलम्बिनी समुन्नता रेखा ( तत्रैव रे ३ ) मध्यालिका[2] नाम, तयोः संयुज्यते ग्रीवाधराख्या[3] स्नायुरज्जुः। उभयतश्च मध्यालिकां द्वे द्वे तोरणाकारे रेखे ( तत्रैव रे १, रे २ ), तत्र ऊर्द्ध्वतन्यौ उत्तरतोरणिके[4] नाम, अधस्तन्यौ तु अधरतोरणिके[5] नाम।

---

१ Ext. Occipital Protuberence. २ Ext. Occipital Crest. ३ Ligamentum Nuchae. ४ Superior Curved lines. ५ Inferior Curved lines.

मूलभागस्य पृष्ठतलमुभयतः शिम्बीबीजाकारौ उत्सेधौ मूलकोटिसंज्ञौ,[1] ( तत्रैव ५, ५ ) तयोश्चूड़ावलयाख्यकशेरुकाया उपरिस्थिताभ्यां स्थालकाभ्यां सन्धिः। तत् पार्श्वयोश्च कलायकौ[2] मध्यरज्जुकाख्यस्नायुसंयोगाय[3] (तत्रैव ३, ३)। तदुपरिष्टाच्च द्वौ द्वौ रन्ध्रमार्गौ[4] मूलकोट्योः पुरःपश्चादवस्थितौ ( तत्रैव ६, ६; ४, ४ ) नाड़ीप्रवेशाय।

एवञ्च पश्चिमकपालस्य सन्धानं षड्भिरस्थिभिः परिज्ञेयम्। तद्यथा— ऊर्द्धतनार्द्धे पार्श्वकपालाभ्यां, अधस्तनेऽर्द्धे पार्श्वयोः शङ्खास्थिभ्यां, मूलाग्रे तु जतूकाख्या, मूलकोट्योश्च चूड़ावलयया इति। सन्धानस्मारकः श्लोकस्तु—

जतूक-चूड़ावलया-शङ्खपार्श्वकपालकैः।
पश्चिमस्य कपालस्य सन्धानं षड्भिरीरितम्॥

पेश्यश्च पश्चिमकपालपृष्ठतले संयुज्यन्ते द्वादश युग्माः। तद्यथा—उत्तरतोरणिकोपकण्ठे तिस्रः—शिरश्छदा[6] पृष्ठप्रच्छदा[7] उरःकर्णमूलिका[8] चेति; तोरणिकयोरन्तराले तिस्रः—शिरोग्रीवपृष्ठिका[8], उत्तरतिरश्चीना[9], शिरोग्रीवविवर्त्तनी[10] चेति; अधरतोरणिकाधस्तिस्रः—शिरःपृष्ठदण्डिका लघ्वी, गुर्व्वी, पार्श्वगा[11] चेति; मूलभागे च तिस्रः—शिरःपूर्व्वदण्डिका[12] लघ्वी गुर्व्वी च, उत्तरा कण्ठसङ्कोचनी[13] चेति। ( तत्संस्थानानि २८ चित्रे द्रष्टव्यानि )।

# अथ पार्श्वकपालास्थिनी।

पार्श्वकपाले[14] नाम शिरःपार्श्वयोः कपालास्थिनी चतुरस्रे पुरःपश्चिमकपालयोर्मध्यस्थे। ताभ्यां मध्यरेखासंहिताभ्यां निर्मीयते शिरःसम्पुटस्य छदिः पार्श्वौ च।

---

१ Occipital Condyles. २ Tubercles. ३ Check Ligaments. ४ Anterior & Posterior Condyloid Foramina. ५ Occipito frontatis. ६ Trapezius. ७ Sterno-mastoid. ८ Complexus. ९ Obliqus Superior. १० Splenius Capitis. ११ Rectus Capitis Posticus—Minor & Major and Lateralis. १२ Rectus Capitis Anticus—Minor and Major. १३ Superior Constrictor of Pharynx. १४ Parietal Bones.

एकैकस्य च पार्श्वकपालस्य द्वे तले बहिस्तलमन्तस्तलञ्चेति। चतस्रश्च धाराश्चत्वारश्च कोणाः।

तत्र बहिस्तलं कूर्म्मपृष्ठप्रायं (२७श चित्रम्), तत्र च पिण्डाकार उत्सेधः पार्श्वकुम्भाख्यः[1]। द्वे च धनुर्वक्रे रेखे शङ्खतोरणिके[2] उत्तरा अधरा चेति नामतः। तत्र अधरायाः शङ्खतोरणिकायाः क्रोड़देशः शङ्खच्छदाख्यपेश्याः[3] प्रभवः।

## [ ३०श चित्रं—पार्श्वकपालम् ( आभ्यन्तरतलम् ) ]।




[ १, १, १, अङ्किताः प्रदेशाः कलाग्रन्थिखातानि। ]

अन्तस्तलं कोरोदरमुच्चावचञ्च। तत्र स्फुटानि मस्तिष्ककलापोषण्या मध्यमधमन्याः[4] प्रतानलाञ्छनानि खातानि चेतस्ततः कलाग्रन्थिनिवेशाय[5] (३०श चित्रे, १)।

---

१ Partieal Eminences. २ Superior and Inferior Temporal Ridges. ३ Temporal muscle. ४ Middle Meningeal Artery. ५ Pacchionian Bodies.

**धारा:** पुन: पार्श्वकपालस्य चतस्रो दन्तुराग्रा:,—क्रमादूर्द्ध्वतनो अध:स्तनी पुरोगा, पश्चिमगा चेति। तत्र ऊर्द्ध्वतनी इतरेण पार्श्वकपालेन सन्धेया, अधस्तनी शङ्खास्थ्ना जतूकास्थ्ना च, पुरोगा पुर:कपालेन, पश्चिमगा पश्चिमकपालेन।

**कोणाश्चत्वार:** पुर:कोणद्वयमूर्द्ध्वाधस्तनं क्रमादुत्तराधरसंज्ञं, पश्चिमकोणद्वयञ्च तथेति। तत्र पुर:पश्चिमो कोणावूर्द्ध्वतनौ आजन्मना वर्षं यावत् कलामयौ स्त:, ततश्च दृश्यम् स्तनन्धयशिशो: कोमलं तालुद्वयं[1] शिरसि पुर: पश्चादवस्थितम्। अधरस्तु पुर:कोणो धमनीखाताङ्कितो जतूकास्थ्ना च सन्धिमान्। अधरश्च पश्चिमकोण: पार्श्विकाख्यसिरापरिखयाऽङ्कित:, सन्धिमांश्च शङ्खास्थ्ना।

**सन्धानञ्चैवमेकैकस्य** पार्श्वकपालस्य अस्थिपञ्चकेन. द्रष्टव्यम्। तत्संग्रहार्थश्चायं श्लोक:—

पुर:पश्चात्कपालाभ्यां शङ्खास्थ्ना च जतूकया।
सन्धि: पार्श्वकपालस्य स्वनाम्ना[2] चेति पञ्चभि:॥

# अथ पुर:कपालम्।

**पुर:कपालम् अग्रकपालं[3]** वा नाम शिर:सम्पुटपुरोभागनिर्म्मापकं कपालास्थि बृहन्मुक्ताग्टहाकारम्। तस्य च द्वावंशौ, ललाटभागो नेत्रच्छदिभागश्चेति। तत्र—

(१) **ललाटभागस्[4]त्रिभि:** फलकैर्निर्म्मित:,—मध्ये ललाटफलकेन पार्श्वयोश्च पार्श्वफलकाभ्यामिति। तेषु—

**ललाटफलकं[5]** बहिस्तले कूर्म्मपृष्ठाकारम्। उभयतश्च तत्रोत्सेधौ कूर्म्मपृष्ठाकारौ अग्रकुम्भौ[6] नाम (३१ चित्रे अ॰कु॰), मेधाविनामत्युन्नतावल्पमेधसान्तु स्वल्पोन्नतौ। तयोर्मध्ये नासामूलगं स्थानं "कूर्चकं[7]" भ्रूमध्यं वा नाम, तत्र मर्म्मेति प्राञ्च:। तदानुपूर्व्या वोर्द्ध्वगता किञ्चिन्मात्रदृश्या रेखा पुर:कपान्याख्यं लाद्ध्र्योरावाल्यं पृथगवस्थितयो: संयोगसूचिका, सेयं गूढसीमन्तिका[8] नाम-

१ Anterior and Posterior Fontanelles. २ स्वनाम्ना इतरपार्श्वकपालेन। ३ Frontal Bone. ४ Frontal Portion. ५ Frontal Plate. ६ Frontal Eminences. ७ Glabella. "कूर्चमस्त्री भ्रुवोर्मध्य" मित्यमर:। ८ Metopic Suture. प्रौढस्य पुर:कपाले तु नेयं दृश्या।

(तत्रैव सौ)। उभयतश्चात्र भ्रुवोरनुक्रमेण तोरणाकारावुत्सेधौ भ्रूतोरणिकाख्यौ[1]। तयोरेकैकस्या द्वे कोट्यौ बाह्यकोटिरान्तरकोटिश्च[2][3], मध्यतश्च छिद्रं कोटरं वा सूक्ष्मम् अधिभ्रुवं[4] नाम (३१श चित्रे अ० भ्रु०)। तत्र बाह्यकोटिरपाङ्गदेशस्था गण्डास्थिसन्धायिनी, आन्तरकोटिर्नासामूलस्था नासास्थिसन्धायिनी। छिद्रं पुनरधिभ्रुवाख्यं तदाख्यसिराधमनीनाड़ीनां[5] निर्गमाय। भ्रूतोरणिकयोश्च पश्चादस्थ्यन्तर्निगूढ़ानि कोटराणि ललाटकोटराणि नाम, तेषां नासागुहाभ्यामनुबन्धः।

[ ३१श चित्रं—पुरःकपालम् ( बहिस्तलम् ) ]।




अन्तस्तलं पुनर्ललाटफलकस्य (३२श चित्रम्) कोरोदरमुपलक्षितञ्च यतस्ततो-ग्रन्थिखातैर्धमनीप्रतानाङ्कैश्च[6][7]। मध्ये चास्य सिरापरिखा, तस्यास्तटयोः संयुज्यते मस्तिष्कच्छदिकाख्यकलाया दात्रिकाख्यो[8] मध्यभागः।

---

१ Superciliary ridges. २ External Angular Process. ३ Internal Angular Processs. ४ Supra-orbital Foramen. ५ Supra-orbital Vein, Artery and Nerve. ६ Depressions for Pacchionian bodies. ७ Markings of Anterior Meningeal Artery amifi cations ). ८ Falx Cerebri.

**पार्श्वफलके** नाम उभयतो ललाटफलकस्य ईषत्खातोदरे फलके शङ्खच्छदाख्यपेश्योर्धारणाय। तयोरूर्द्ध्वसीम्नोर्धनुर्वक्रे रेखे शङ्खतोरणिके[1] नाम तयोरेव पेश्योः प्रभवभूती।

## [ ३२श चित्रं—पुरःकपालम् ( अन्तस्तलम् ) ]

( प्रदर्शनसौकर्य्याय उत्तानमधोमुखञ्च )




**३२श चित्र व्याख्या**—१, कलाग्रन्थिखातानि। २, धमनीप्रतानाङ्काः। ३, ४, झर्झरकोटराणि। ५, महापरिखा। ६, तस्यास्तटद्वयम्। ७, अश्रुग्रन्थिखातम्। ८, नासागुहाच्छदिनिर्म्मापकं क्षुद्रफलकम्। ९, सिरापरिखायास्तटद्वयम्। सं० १—जतूकास्थ्नो लघुपचत्या सन्धेयोंऽशः। सं० २, झर्झरकपार्श्वेन। सं० ३, अश्रुपीठास्थ्ना। सं० ४, ऊर्द्ध्वहन्वस्थ्ना। सं० ५, नासास्थ्ना। सं० ६ झर्झरकस्य मध्यफलकेन।

(१) **नेत्रच्छदिभागस्तु** पुरःकपालस्य नेत्रगुहाच्छदिभूताभ्यां नेत्रच्छदिफलकाभ्यां, महापरिखया च तन्मध्यवर्त्तिन्या उपलक्षितः। तत्र—

---

१ Temporal Plates. २ Te·poral Ridges.

**नेत्रच्छदिफलके**[1] नाम त्रिकोणप्राये मसृणे ईषत्कोटरोदरे च फलके अक्षिगोलकच्छदिभूते। एकैकस्य च फलकस्य बहिरंशे ईषदालक्ष्यं खातमश्रु-[2] ग्रन्थिधारणाय।

मध्ये चानयोः फलकयोः परिखा **महापरिखा**[3] नाम। सा च तटद्वय-संहितस्य झर्झरकास्थ्नश्चालनोपटलाख्येन भागेनापूरणीया। तटद्वये चास्याः कोटराणि झर्झरास्थ्नोऽभ्यन्तरस्थैः कोटरैरनुषङ्गीणि। पुरस्ताच्च महापरिखायाः क्षुद्रमस्थिफलकमिकमिकैकतो नासागुहाच्छदिनिर्मापकम्। तन्मध्यतश्चाग्रकण्ठकं,[4] पुरोभागे नासास्थिभ्यां पश्चिमतश्च झर्झरास्थ्नो मध्यफलकेन सन्धेयम्। तदुभय-तश्च ललाटकोटरद्वाराणि[5]।

**सन्धान** पुनः पुरःकपालस्य एकैकार्द्धे सप्तभिरस्थिभि र्द्रष्टव्यम्। तद्यथा —महापरिखाया बहिःसीम्नि सन्धीयते अस्थिचतुष्टयं—पुरोऽर्द्धे नासास्थि ऊर्द्ध्वहन्वस्थि अश्रुपीठास्थि च, पश्चार्द्धे झर्झरकास्थि चेति। नेत्रच्छदिफलकस्य पश्चिमान्तःकोणे जतूकास्थ्नः क्षुद्रपक्षतिः। तद्बहिःसीम्नि पश्चार्द्धे बृहत्पक्षतिः, पुरोऽर्द्धे गण्डास्थि। ललाटफलकपश्चिमधारायां च पार्श्वकपालमिति (द्रष्टव्यतां २२श चित्र व्याख्या)। तेषु जतूका झर्झरकश्चेति द्वे एकैके, अन्यानि तु युग्मानि। एवञ्च पुरःकपालस्य द्वादशभिः सन्धिः। तत्स्मारकः श्लोकस्तु—

युग्मै र्नासाश्रुगण्डोर्द्ध्वहनुपार्श्वकपालकैः।
जतूका झर्झराभ्याञ्च बद्धमग्रकपालकम्॥

पेश्यश्चात्र निविशन्ते तिस्रो युग्माः। तद्यथा—भ्रूमध्यमुभयतो भ्रूसङ्कोचनी नेत्रनिमीलनी[6] च, शङ्खतोरणिकायां शङ्खच्छदा चेति।

## अथ शंखास्थिनी।

**शङ्खास्थिनी**[7] द्वे शङ्खपार्श्वगे पार्श्वकपालयोरधः सीमस्थे। तस्य त्रयो भागाः —शङ्खचक्रं, कर्णमूलपिण्डम्, अश्मकूटञ्चेति। तत्र—

(१) **शङ्खचक्रं**[8] नाम (२२श चित्रम्) शङ्खदेशनिर्म्मापकं चक्रप्रायमस्थि-फलकम्। तस्य बहिस्तलं मसृणं धमनीखाताङ्कितञ्च। तत्र दीर्घमग्रतोमुखं प्रबर्द्धनकं गण्डास्थिसन्धायि **गण्डप्रबर्द्धनकं**[9] नाम। तस्य द्वे धारे, उत्तरा अधरा

---

१ Orbital Plates. २ Lachrymal Fossa. ३ Ethmoid Notch. ४ Nasal Spine. ५ Openings of Frontal Sinuses. ६ Corrugator Supercilii & Orbicularis Palpabrerum. ७ Temporal Bones. ८ Squamous Portion. ९ Zygomatic Process.

च। तत्रोत्तरधारायां संयुज्यते शङ्खावरणी कला। अधरधारायाः पुनरधस्तात् पुरोभागे अर्व्वुदं[1] हनुसन्धिपुरस्थं सन्ध्यर्व्वुदं[2] नाम। तत्पश्चात् हनुसन्धिस्थालकं[3] हनुमुण्डधारणाय ततश्च कर्णकुहरं[4] कर्णस्रोतसो बहिर्द्वारभूतम्। कर्णकुहरपरिधौ च कर्णशष्कुलीनिर्म्माणकाणां तरुणास्थ्नां संयोगः। मध्ये च स्थालककुहरयोस्त्रिकोणमस्थिफलकं कर्णमूलफलकं[5] नाम, तत् कर्णमूलिकाख्यस्य लालाग्रन्थेरधिष्ठानभूतम्। गण्डप्रवर्द्धनञ्च पश्चादधरया शङ्खतोरणिकाख्यया[7] समुन्नतरेखया सानुबन्धं, तस्याश्चाधस्तात् रेखा शङ्खकर्णमूलपिण्डयोः संयोगाङ्करूपा ( ३३श चित्रे सं० रे० )।

## [ ३३श चित्रम्—शङ्खास्थि ( बहिस्तलम् )। ]




अन्तस्तलन्तु शङ्खचक्रस्य मस्तिष्कमध्यपिण्डधारणाय किञ्चित्खातोदरं धमनीखाताङ्कं प्रतनुधारञ्च मीनशल्कवत् ( ३४श चित्रम् )।

---

१ Temoral Fascia. २ Articular Tubercle. ३ Glenoid Fossa. ४ Ext. Auditory Meatus. ५ Tympanic plate. ६ Parotid Gland. ७ Temporal Ridge.

(२) कर्णमूलपिण्डं[1] नाम कर्णमूलस्थमस्थिपिण्डं गोस्तनकाख्येन[2] प्रवर्द्धनकेनोपलक्षितम्। प्रवर्द्धनञ्चेदमधोमुखम् अन्तःशुषिरञ्च, कोटराणि[3] च तदन्तःस्थानि कर्णान्तरीयस्रोतसा सानुबन्धानि। अन्तस्तले चास्य अर्द्धचन्द्रिका नाम सिरापरिखा[4] पार्श्विकाख्यसिरापरिखया सानुबन्धा, छिद्रञ्च गोस्तनच्छिद्रं[5] नाम सिरापरिखाप्रवेशिसिराधारणाय।

[ ३४श चित्रम्—शङ्खास्थि ( अन्तस्तलम् )। ]




(३) अश्मकूटं[6] नाम पाषाणवदतिघनसङ्घातं कूटवच्चतुर्धारमस्थिपिण्डं शिरःसम्पुटभूमेर्मध्यभागे तिर्य्यक्प्रविष्टम्। तस्य चोर्द्ध्वदेशः शैलसानुसदृशः शिरःसम्पुटभूमिनिर्म्मापकः मस्तिष्कधारणाय; अधोदेशः कर्णपीठ-कण्ठच्छदि-निर्म्मापकः। निगूढ़ानि चाश्मकूटाभ्यन्तरतस्त्रीणि कर्णास्थीनि सूक्ष्माणि श्रुति-यन्त्रञ्च।

अथैतानि अश्मकूटे विशेषतो लक्षणीयानि ( ३४श चित्रम् )

(क) शंखचक्राश्मकूटयोः संयोगाङ्करेखा[7] ऊर्द्धसीमस्था। तदुपकण्ठे च कूटाग्र-

१ Mastoid Portion. २ Mastoid Process. ३ Mastoid cells. ४ Sigmoid Groove. ५ Mastoid Foramen. ६ Petrous Portion. ७ Petro-Squamous Suture.

भागसन्निधौ रन्ध्रमार्गद्वयं, तत्रोर्द्ध्वतनो मार्गः पटहोत्तंसिन्याख्यपेश्याः[1] प्रवेशाय, अधस्तनस्तु श्रुतिमध्यस्रोतसा सङ्गतः पटहपूरणिकाख्यनाड़िकाया[2] द्वारभूतः ।

(ख) श्रोत्रच्छदिकूटं[3] नाम उत्सेधः श्रोत्रपथस्यच्छदिभूतः । तत्पश्चिमतश्च समुन्नता रेखा अश्मतटिका नाम ।

(ग) कर्णान्तर्द्वारं[4] श्रुतिवक्त्राख्यनाड़ीद्वयप्रवेशाय ।

(घ) कर्णिकारन्ध्रं[5] कर्णभूमिगामिसूक्ष्मनाड़ी-धमन्योः रन्ध्रपथप्रवेशाय ।

(ङ) शिफाप्रवर्द्धनकं[6] शिफाकारमधोमुखं पेशीस्नायुसंयोगप्रयोजनम् । मूले चास्य छिद्रं शिफागोस्तनान्तरीयं[7] नाम, तद् वक्त्रनाड्या बहिर्निर्गमाय ।

(च) मातृकासुरङ्गा[8]—मातृकाख्यधमन्या धारणाय रन्ध्रमार्गरूपा । सेयमश्मकूटस्याग्रभागतो दृष्टिकद्वारा कूटान्तर्निगूढ़ा, अधोधारायाञ्च दृष्टान्यद्वारा ।

**सन्धानं** पुनरेकैकस्य शंखास्थ्नः पञ्चभिरस्थिभिः परिज्ञेयम् । तद्यथा—गण्डप्रवर्द्धनाग्रे गण्डास्थ्ना । शंखचक्रधारायामागण्डप्रवर्द्धनं पार्श्वकपालेन । तत्रैव गण्डप्रवर्द्धनाधस्तादश्मकूटाग्रं यावत् पश्चिमकपालेन । अश्मकूटाग्रादागण्डप्रवर्द्धनकोपकण्ठं जतूकास्थ्ना । हनुसन्धिस्थालके चाधोहन्वस्थिमुण्डेनेति ।

पार्श्वपश्चात्कपालाभ्यां गण्डास्थ्ना च जतूकया ।
बद्धं, स्पृष्टमधोहन्वा, शंखं स्यात् पञ्चसन्धिकम् ॥

**पेश्यश्चात्र** संयुज्यन्ते एकैकस्मिन् शंखास्थ्नि पञ्चदश । तद्यथा—शंखचक्रबहिस्तले शंखच्छदा[9] । गण्डप्रवर्द्धने गण्डमूलिनी[10] । कर्णमूलपिण्डस्य बहिस्तले ललाटसङ्कोचनी[11], उरःकर्णमूलिका[12] शिरोग्रीवविवर्त्तनी[13], पृष्ठदण्डिका[14] शिरोयुजा, द्विगुम्फिका[15] कर्णपृष्ठिका[16] चेति षट् । शिफाप्रवर्द्धनके शिफागलान्तरीया[17], शिफाकण्ठिका[18] शिफारसनिका[19] चेति तिस्रः । अश्मकूटभागे तालूत्तोलनी[20] पटहोत्तंसनी[21], तालूत्तंसनी[22], कर्णान्तरिका[23] चेति चतस्रः । इति साकल्येन पञ्चदश ( तेषां संयोगस्थानानि यथासम्भवं चित्रेष्वङ्कितानि ) ।

---

१ Tensor Tympani. २ Eustachian tube. ३ Eminentia Arcuata. ४ Internal Auditory Meatus. ५ Hiatus Canalis Facialis. ६ Styloid process. ७ Slylo-mastoid Foramen. ८ Carotid Canal. ९ Temporal. १० Masseter. ११ Occipito frontalis. १२ Sterno-mastoid. १३ Splenins Capitis. १४ Longissimus Capitis ( or Trachelo-mastoid ). १५ Digastric. १६ Retrahens Aurem. १७ Stylo-pharyngeus. १८ Stylo-hyoid. १९ Stylo-glossus २० Levator Palati. २१ Tensor Tympani. २२ Tensor Palati. २३ Stapedius.

# अथ जतूकास्थि ।

**जतूकास्थि** नाम[1] शिरःसम्पुटमध्यभूमिनिर्म्माणपकं जतूकाकारमस्थिखण्डं सकलशिरःकपालकेन्द्रकीलभूतम् (३५श चित्रम्)। तस्य चत्वारो भागाः—मध्ये जतूकाशरीरम्, पार्श्वयोर्द्व हत्पक्षतिद्वयं लघुपक्षतिद्वयञ्च, अधस्ताच्चरणद्वयञ्चेति। तत्र—

(१) **जतूकाशरीरं**[2] नाम मध्यस्थं पिण्डमुच्चावचं शून्यगर्भञ्च। गर्भस्थानि चास्य कोटराणि जातूककोटराणि[3] नाम झर्झरास्थिकोटरैः सानुबन्धानि।

अथास्य चत्वारि तलानि द्रष्टव्यानि—पुरस्तलं, पश्चिमतलम्, ऊर्द्धतलम्, अधस्तलञ्चेति। तत्र—

(क) पुरस्तलं झर्झरास्थ्नः पार्श्वपिण्डाभ्यामुभयतः सन्धिमत्, मध्यतश्च तस्य समुन्नता रेखा झर्झरास्थ्नो मध्यफलकेन सन्धायिनी। चूडायाञ्चास्य प्रवर्द्धनं त्रिकोणकण्टकं[4] नाम झर्झरास्थिच्छदिभूतेन फलकेन सन्ध्यर्थम्।

(ख) पश्चिमतलं चतुरस्रं पश्चिमकपालस्थ्नो मूलभागेन सन्धेयम्।

(ग) ऊर्द्धतले[5] त्रिकोणकण्टकस्य पश्चात् परिखा, छिद्रद्वयञ्च परिखाप्रान्तयोः, क्रमाद्दृष्टिनाडीपरिखा[6] दृष्टिनाडीरन्ध्रे[7] च नामतः। तत्र परिखा दृष्टिनाडीयोजिकायै धारणाय, रन्ध्रद्वयन्तु दृष्टिनाड्योरच्चिकूटप्रवेशाय। तेषां पश्चात् पोषणिकाख्यग्रन्थिं[8] धारणाय खातं पोषणिकाखातं[9] नाम।

तस्यापि पश्चादीषदुन्नतं कूटं सुषुम्नापीठं[10] नाम सुषुम्नाशीर्षकधारणाय। उभयतश्च तस्य गभीरे खाते मातृकापरिखे[11] नाम, ते मातृकाधमन्योर्धारणाय। एकैकतश्च तत्पुरोभागे पौर्व्वापर्य्येणस्थितास्तिस्रो गुलिकाः[12] पुरोमध्यपश्चिमाख्याः।

---

१ Sphenoid Bone. २ Body of the Sphenoid. ३ Sphenoidal Sinuses. ४ Ethmoidal Spine. ५ Sella Turcica. ६ Optic Foramina. ७ Optic Commissure. ८ Pituitary Body. ९ Pituitary Fossa. १० Dorsum Sella. ११ Carotid Groove १२ Clinoid processes ( anterior, middle & posterior )




**[ ३५श चित्रम्—जतूकास्थि ( ऊर्ध्वतलम् ) ]**

**( स्वाभाविकायतनम् )**

(घ) अधस्तलन्तु जतूकाशरीरस्य नासागुहा-कण्ठविवरयोश्छदिभूतम् । तत्र स्थूलमूलासमुन्नता रेखा रसनिका[1] नाम, सेयं नासामध्यप्राचीरभूतस्य सीरिकास्थ्नः पश्चिमप्रान्तेन सन्धायिनी ।

[1] Rostrum.

(२) **बृहत्पक्षतिद्वयं**[१] (३५श चित्रं) जतूकाशरीरादुभयतः शङ्खदेश-पर्य्यन्तप्रसृतं त्रिकोणप्रायञ्च। एकैकस्य च पक्षस्य त्रीणि तलानि,—ऊर्द्ध्वतलं, पुरस्तलं, बहिस्तलञ्चेति। तत्र—

(क) ऊर्द्ध्वतले पक्षतिपृष्ठाख्ये मस्तिष्कमध्यभूमिभूते विवरद्वयं वृत्तविवरं[२] जाम्ववविवरञ्च[३] नाम, ताभ्यां पञ्चमनाड्या मध्यमपश्चिमयोः शाखयोर्निर्गमः। मूले चास्य पश्चिमतश्छिद्रं कोणविवरं[४] नाम कलापोषण्याख्यधमन्याः प्रवेशाय।

(ख) पुरस्तलं चतुरस्रं नेत्रकूटबहिःप्राचीरभूतञ्च।

(ग) बहिस्तलं विशेषादुच्चावचं शङ्खाधरिकाख्यया[५] रेखया द्विभागविभक्तञ्च। तत्र रेखाया ऊर्द्ध्वतनो भागः शङ्खदेशनिर्म्मापकः शङ्खच्छदाख्य पेशीप्रभवश्च, अधस्तनस्तु भागो गण्डमूलखातस्थः।

(३) **लघुपक्षतिद्वयं**[६] जतूकाशरीरस्य पुरस्तादुभयतोऽवस्थितं, पुरःकपालास्थ्नो नेत्रच्छदिफलकाभ्यां सन्धेयम। मध्ये च तयोः संयोजकं त्रिकोणकण्टकम्, मूले चोभयतो दृष्टिनाड़ीरन्ध्रद्वयं वर्णितपूर्व्वम्।

एकैकतश्च लघुबृहत्पक्षत्योर्मध्यतोऽन्तरालं त्रिकोणप्रायम्—पक्षान्तरालं[७] नाम। तेन शिरःसम्पुटाद् बहिर्निर्गच्छन्ति तृतीया, चतुर्थी, षष्ठी च नाड़ी, पञ्चम्याश्च नाड्याः प्रथमा शाखा नेत्रगा, सिराधमन्यश्च नेत्रगामिन्यः।

(४) **चरणद्वयं**[८] पुनर्जतूकास्थ्नः शरीरपश्चिमप्रान्तादुभयतो नीचैर्निर्गतम्। एकैकस्मिंश्च चरणे द्वे द्वे अस्थिफलके[९], तयोः पुरोवर्त्तिफलकमायतपृष्ठम्। पश्चिमन्तु अङ्कुशायम्, अङ्कुशं[१०] च तदाश्रित्य विवर्त्तते तालूत्तंसनी[११] नाम पेशी। मध्ये चानयोः स्फुटमन्तरालं[१२] तच्च तात्वस्थ्नः सन्धानम्।

---

१ Greater wings. २ Foramen Rotundum. ३ Foramen Ovale. ४ Foramen Spinosum. ५ Pterygoid Ridge. ६ Lesser wings. ७ Superior Orbital Fissure (Foramen Lacerum Ant). ८ Pterygoid processes. ९ Pterygoid plates. १० Hamular Process. ११ Tensor Palati. १२ Pterygoid Notch.

**सन्धानं** पुनर्जतूकास्थ्नः सप्तभिरपि शिरःसम्पुटनिर्म्मापकैरस्थिभिः पञ्चभिश्च मुखमण्डलास्थिभिर्विज्ञेयम् । एष च तत्सन्धिसंग्राहकः श्लोकः—

शिरःसम्पुटगैः सर्व्वैर्युगाभ्यां गण्डतालुनोः ।
सौरिकाख्येन चानद्धा जतूका मध्यसंस्थिता ॥

सन्धानप्रकाराश्च चित्रे द्रष्टव्याः ।

**पेश्यश्चात्र** संयुज्यन्ते एकैकत एकादश । तद्यथा—बृहत्पक्षतेर्बहिस्तले द्वे, शङ्खच्छदा[1] हनुमूलकर्षणी उत्तरा[2] चेति । लघुपक्षतेः पुरोभागे अक्षिकूटगाः पेश्यः षट् । जतूकाचरणफलकयोः हनुमूलकर्षणी अधरा[3] (उत्तरा च). तालूत्तंसनी[4], उत्तरा कण्ठसङ्कोचनी[5] चेति ।

## अथ झर्झरास्थि ।

**झर्झरास्थि**[6] नाम नासामूलगं शुषिरभूयिष्ठमस्थिपिण्डकमक्षिकोटरयोरन्तराले निगूढ़म् (३६श चित्रम्) । तस्य त्रयो भागाः—मध्यफलकम्, चालनीपटलम्, पार्श्वपिण्डद्वयञ्चेति । तत्र—

(१) **मध्यफलकं**[7] नाम नासामूल-मध्यप्राचीरनिर्म्माणसहायभूतं फलकम् । तस्याग्रधारायां सन्धीयते पुरःकपालस्य अग्रकण्टकं, नासास्थ्नोश्च परस्परसंयोगधारा । पश्चिमधारायां जतूकास्थ्नः पुरस्तलस्था रसनिकाख्या मध्यरेखा, सौरिका च । अधोधारा त्वस्य त्रिकोणाख्यं[8] तरुणास्थ्ना नासाग्र-मध्यप्राचीरभूतेन सन्धायिनी ।

(२) **चालनीपटलं**[9] नाम नासामूलपटलं[10] भूतम् मध्यफलकशिरसि संलग्नं चालनीवत् सूक्ष्मच्छिद्रबहुलं फलकम् मध्यफलकस्य शिरसि संलग्नम् । तस्य चूड़ायाम् प्रवर्द्धनं शिखरकं[11] कण्टकं नाम, तत्र दात्रिकाख्यं[12] कलांशसंयोगः, छिद्रपथैश्च प्रसरन्ति गन्धग्राहिन्[13] नाड्योः प्रतानाः ।

(३) **पार्श्वपिण्डद्वयम्**[14] मधुचक्रवत् शुषिरगर्भं प्रतनुपत्रकनिर्म्मितञ्च । तत्र एकैकस्य पार्श्वपिण्डस्य षट् तलानि । तत्रोर्द्ध्वतलं कोटरबहुलं पुरःकपालस्य महापरिखापरिधिसन्धायि । पुरस्तलम् अश्रुपीठास्थ्ना ऊर्द्ध्वहन्वस्थ्ना च

---

१ Temporal Muscle. २ Ext. Pterygoid Muscle. ३ Int. Pterygoid. ४ Tensor Palati. ५ Superior Constrictor of Pharynx. ६ Ethmoid Bone. ७ Perpendicular Plate. ८ Triangular Cartilage of Nasal Septum. ९ Cribriform Plate. १० पटलं छदिः (Roof). ११ Crista Galli. १२ Falx Cerebri. १३ Olfactory Nerves. १४ Lateral Masses.

## [ ३६श चित्रम्—झर्झरास्थि ]

( पश्चिमतो दृष्टं—स्वाभाविकायतनञ्च )




सन्धिमत्, कोटराणि च तदधो नासागुहया सानुबन्धानि। पश्चिमतलमपि शुषिरबहुलं तादृशेन जतूकास्थिपुरस्तलेन सन्धिमत्। अन्तस्तलं नासागुहायाः पार्श्वप्राचीरभूतं क्षुद्रशुक्तिकाकाराभ्यामस्थिफलकाभ्यामुपलक्षितञ्च, तयोः क्रमात् ऊर्द्ध्वशुक्तिका-मध्यशुक्तिका[1] चेति संज्ञे। तयोराद्या नासागुहायाः ऊर्द्ध्वसुरङ्गायाः, द्वितीया तु मध्यसुरङ्गायाश्चूड़ाभूता, सन्धीयते च तदधः अधःशुक्तिकास्थि[2]। बहिस्तलं श्लक्ष्णचतुष्कोणफलकमयं नेत्रकोटरस्य अन्तःपीठनिर्म्मापकम्, तस्य नेत्रान्तःपीठं[3] संज्ञा। एकैकस्य च पार्श्वपिण्डस्यास्थिचतुष्टयेन सन्धिः। तद्यथा—ऊर्द्ध्वं पुरःकपालस्य नेत्रच्छदिफलकेन, अधः ऊर्द्ध्वहन्वस्थ्ना, पुरः अश्रुपीठास्थ्ना, पश्चात् ताल्वस्थ्ना चेति।

**सन्धानं** चैवं झर्झरास्थ्नस्त्रयोदशभिः शिरोऽस्थिभिर्विज्ञेयम्। तद्यथा—

पुरःकपालञ्च तथा जतूका नासास्थिनी चोर्द्ध्वहनू च तालू।
सीराग्रिका चाश्रुधरे च शुक्ती त्रयोदशैतानि हि झर्झरास्थ्नः[4]॥

पेशी तु नात्र निविशते क्वापि।

तान्येतानि अष्टौ शिरःसम्पुटास्थीनि व्याख्यातानि।

---

१ Superior Turbinated Process & Middle Turbinated Process. २ Inferior Turbinated Bone. अस्यैव केवलं शुक्तिकासंज्ञापि। ३ Os planum. ४ सन्धीयन्ते इति शेषः।

## अथ कपालचक्रकाणि ।

**कपालचक्रकाणि** नाम कपालास्थ्नां सीमन्तेषु स्थितानि समन्ततो दन्तुरधाराणि शकलानि। तानि प्रायशः पार्श्वकपालयोः सन्धाने दृश्यानि, विशेषतश्च ब्रह्म-शिवरन्ध्रयोः सविधे। सर्व्वथा अनिश्चितावस्थानान्नेच्च तेषां पृथक्संख्या।[1]

## अथ मुखमण्डलास्थीनि ।

**मुखमण्डलास्थीनि** चतुर्द्दश मुखमण्डलनिर्म्मापकाणि। तद्यथा—द्वे नासास्थिनी, द्वे ऊर्द्ध्वहन्वस्थिनी, द्वे अश्रुपीठे, द्वे गण्डास्थिनी, द्वे तात्वस्थिनी, द्वे शुक्तिके चेति षट् युग्मास्थीनि ( इति द्वादश )। सोराग्रिका अधोहनुश्चेति एकाकिनी अस्थिनी द्वे इति। तत्र हन्वस्थ्नां प्रयोजनं भक्षणचर्व्वणादि, इतरेषान्तु इन्द्रियाधिष्ठाननिर्म्माणादि।

## अथ नासास्थिनी ।

[३६श चित्रम्—नासास्थिनी]

( सम्मुखतो दृश्ये )




**नासास्थिनी**[2] द्वे नासामूलस्थे बहिर्न्युब्जपृष्ठे अन्तःकोरोदरे च। ते मध्यरेखायां परस्परसन्धायिनी। तयोरूर्द्ध्वप्रान्तयोः सन्धिः पुरःकपालास्थ्नो नासामूलखातेन, बहिःपार्श्वयोस्तु ऊर्द्ध्वहन्वस्थ्नोर्नासाकूटाभ्याम्। अधःप्रान्तयोः पुनर्नासापाश्विकाख्ययो[3]स्तरुणास्थिभ्यां संयोगः। पश्चिमतश्च परस्परसन्धानरेखायां सन्धीयेते पुरःकपालस्याग्रकण्टकं, झर्झरास्थि च। एकैकस्य च नासास्थ्नोबहिस्तले मध्यतश्छिद्रं सिराप्रवेशाय, अभ्यन्तरतश्च सूक्ष्मा परिखा नासानाड़ी[4] धारणाय।

**सन्धान**ञ्चैवमेकैकस्य नासास्थ्नोऽस्थिचतुष्टयेन द्रष्टव्यम्।[5]

---

१ Wormian Bones. २ Nasal Bones. ३ Lateral Cartilages of the Nose. ४ Nasal Nerve ( Ext. Branch ). ५ तरुणास्थिवर्जमिति बोध्यम्।

# अथ ऊर्द्ध्वहन्वस्थिनी।

ऊर्द्ध्वहन्वस्थिनी[1] द्वे मुखमण्डलास्थिषुप्रधानभूते। ताभ्यां हि परस्परसंहिताभ्यां निर्म्मीयते ऊर्द्ध्वहनुमण्डलं सतालुपटलं सदन्तोदूखलञ्च। निर्म्माणोपकरणे च ते प्राधान्येन नासाकोटरयोर्नेत्रपीठयोः, मुखमण्डलपुरःपार्श्वभागयोश्च। आकारमहत्त्वेऽपि लघुतरे च ते शून्यगर्भत्वात्।

एकैकस्य च ऊर्द्ध्वहन्वस्थ्नः पञ्च भागाः—मध्ये हनुपिण्डम्, अभितश्च प्रवर्द्धनचतुष्टयमिति। प्रवर्द्धनानि च उपरिष्टान्नासाकूटम् बहिःपार्श्वतो गण्डधरकूटम्, अन्तःसीम्नि तालुफलकम्, अधःसीम्नि च दन्तोदूखलिकमिति। तत्र—

## [ ३७श चित्रम्—ऊर्द्ध्वहन्वस्थि (बहिस्तलम्) ]




(१) हनुपिण्डं[2] नाम शून्यगर्भमस्थिपिण्डं मध्यस्थम्। तस्य चत्वारि तलानि बहिस्तलं—मौखिकतलं नाम बहिर्मुखमण्डले दृश्यम्, गण्डोत्तरतलं गण्डधरकूटपश्चिमम्, नेत्रपीठतलं नेत्रकोटरभूमिभूतम्, आन्तरतलं नासास्यविवरयोः पार्श्वप्राचीरभूतञ्चेति। तेषु—

---

१ Superior Maxillary Bones. सुश्रुते तु ऊर्द्ध्वहन्वस्थ्नोर्मिलितयोरैक्येन ग्रहणम्। तथाच तन्त्रते ऊर्द्ध्वहनुरधोहनुश्चेति द्वे एव हन्वस्थिनी ( न तु त्रीणि ) [ सु० शा० ५ अ० ]। २ Body.

## [ ३८श चित्रम्—ऊर्द्ध हन्वस्थि ( अन्तस्तलम् ) ]




(क) मौखिकतले[1] नेत्रकोटराधःसीम्नि छिद्रं नेत्राधरीयं[2] नाम, तदाख्य नाड़ी धमनीनिर्गमाय।

(ख) गण्डोत्तरतलं[3] तदाख्यखातस्य प्राचीरनिर्म्मापकं गण्डच्छदाख्यपेशी-संवृतम्। तत्र कानिचित् सूक्ष्माणि विवराणि पश्चिमदन्तिकाख्यानि[4] तदाखग्र-नाड़ी-धमनीनां प्रवेशाय। तत्रोच्चावच उत्सेधः पश्चिममूले हनुपश्चिमार्व्वुदं[5] नाम, तस्य ताल्वस्थ्ना सन्धानम्।

(ग) नेत्रपीठतलं[6] नेत्रकोटरभूमेः पुरोभागनिष्पादकं तस्यान्तःसीम्नि खातम् अश्रुपीठखातं[7] नाम, तत्र सन्धीयते अश्रुपीठास्थि। अन्तर्धारा चास्य क्रमात् झर्झरक ताल्वस्थिभ्यां सन्धायिनी। सूक्ष्मा च तद्बहिःप्रान्ते स्रोता[8] नेत्राधरीय-पेशी धमनीनां धारणाय, छिद्रञ्चात्रैवाग्रदन्तिकाख्य[9]नाड़ी-धमनीप्रवेशाय।

(घ) आन्तरतलं[10] नासास्यविवरपार्श्वस्थम्, तस्य पुरःसीम्नि महत् खातं नासाखातं[11] नाम। द्विभागविभक्तञ्च तत् मध्यतस्तालुफलकेन। तस्योर्द्धतनो भागो नासागुहांशः, अधस्तनस्तु मुखविवरांशः। दृश्यञ्च तत्रैव पार्श्वतो महत् कोटरं हनुगर्भकोटरं[12] नाम, तत् सानुबन्धं नासागुहाया मध्यसुरङ्ग[13]रूपेण। वर्त्तते च तत् संहतकरोटौ झर्झरक शुक्तिका-ताल्वस्थिभिः पिहितम्, अन्तरा-वृतञ्च कलाविशेषेण जीवच्छरीरे। द्वारञ्चा[14]स्य तथापिहितस्य सूक्ष्मं दृश्यते शलाकामात्रप्रवेशार्हं नासागुहान्तः।

१ Facial Surface. २ Infra-orbital Foramen. ३ Zygomatic Surface. ४ Posterior Dental Canals. ५ Tuberosity. ६ Orbital Surface. ७ Lachrymal Notch. ८ Infra-orbital Canal. ९ Opening of Anterior Dental Canal. १० Internal Surface. ११ Nasal Fossa. १२ Antrum of Highmore. १३ Middle Meatus of the Nose. १४ एतच्च सर्व्वं घ्राणेन्द्रियवर्णनावसरे सम्यक् स्फुटीभविष्यति।

(२) **नासाकूटं**[1] नाम नासामूल-पार्श्वगं प्रवर्द्धनम्। तस्य सन्धिरूर्द्ध्वं पुरःकपालेन, मध्यरेखायां नासास्थ्ना, बहिःसीम्नि च अश्रुपीठास्थ्ना। अन्तस्तलञ्चास्य खातोदरं नासामध्यसुरङ्गानिर्म्माणाय तत्र च रेखाद्वयं क्रमात् झर्झरकास्थ्नो मध्यशुक्तिकाभागस्याधःशुक्तिकास्थ्नश्च सन्धानाय। पश्चिमतश्चास्य स्फुटा परिखा अश्रुवाहिकायाः[2] धारणाय।

(३) **गण्डधरकूटं**[3] नाम त्रिकोणाकार उत्सेधो बहिःपार्श्वगः। तस्य गण्डास्थ्ना सन्धानम्।

(४) **तालुफलकं**[4] नाम तालुपुरोभागनिर्म्मापकफलकं हनुपिण्डस्यान्तरतलादुद्गतम्, तस्योर्द्ध्वतलं नासाभूमिः, अधस्तलञ्च तालुच्छदिभूतम्। सन्धीयते च तन्मध्यरेखायामितरस्योर्द्ध्वहन्वस्थ्नस्तालुफलकेन। एवंसंहितस्य च तालुफलकस्य पुरोभागे मध्यरेखायां दृश्यते खातमधस्तले तत् अग्रतालुखातं[5] नाम, तत्र चत्वारि च्छिद्राणि नासातालुगामिनीनां नाडी-धमनीनां[6] तालुप्रवेशाय। ऊर्द्ध्वतले च तालुफलकस्य मध्यरेखायाः पुरोऽर्द्धे समुन्नता रेखा सीरिकास्थ्नः सन्धानाय। पश्चिमधारायाञ्च तालुफलकस्य सन्धीयते तालव्यास्थ्नो ह्रस्वपत्रकम्।

(५) **दन्तोदूखलिकं**[7] नाम दन्तोदूखलधारणमर्द्धचन्द्राकारमधोमुखं प्रवर्द्धनकम्। तत्र बाल्ये पञ्च दन्तोदूखलानि, यौवने त्वष्टौ, तत्तत्संख्यकदन्तधारणाय। तद्बहिःपृष्ठे च खातं दन्तमूलविलाख्यं[8] पेशीसंयोगाय।

**सन्धान**ञ्चैवमेकैकस्योर्द्ध्वहन्वस्थ्नो नवभिरस्थिभिर्द्रष्टव्यम्। तस्य चायं संग्रहश्लोकः—

स्वनाम्ना गण्डनासाश्रुसीरिकातालुशुक्तिभिः।
झर्झराग्रकपालाभ्यां नवभिर्हनुरूर्द्ध्वगा।

**पेश्य**श्चात्र संयुज्यन्ते एकैकस्मिन्नूर्द्ध्वहन्वस्थि, एकादश। ताः प्रायेण नेत्रोन्मीलन-निमीलन नासाधरौष्ठसंकोचन-विस्फारण चर्व्वणादिकार्य्याः। तासां विवरणं पेश्यध्याये वक्ष्यते।

---

१ Nasal Process. २ Lachrymal Duct. ३ Malar Process. गण्डकूटमिति तु गण्डास्थ्न उन्नतभागस्य संज्ञा। ४ Palate Process. ५ Anterior Palatine Fossa. ६ Naso-palatine Nerves and Anterior Palatine Vessels. ७ Alveolar Process. दन्तोदूखलानां धारणादियं संज्ञा। ८ Incisive Fossa.

## अथ अश्रुपीठास्थिनी ।

**अश्रुपीठे[1] अश्रुधरे वा** ( ३८श चित्रम् ) नाम द्वे क्षुद्रास्थिनी नासास्थ्नोर्नासाकूटयोश्च पश्चादक्षिकोटरपार्श्वान्तर्निगूढ़े तनुपत्रनिर्म्मिते अर्द्धपात्र-सदृशाकारे च । अश्रुवाहिकाख्यप्रणालीधारणात्तयोरश्रुपीठसंज्ञा ।

**[३८श चित्रम्—अश्रुपीठास्थि]**

( बहिस्तलम् )




एकैकस्य चाश्रुपीठस्य द्वे तले—बहिस्तलमन्तस्तलञ्चेति । तत्र बहिस्तले अश्रुमार्गधारणाय प्रणाली—अश्रुवाहिका[2] नाम (चित्रे अ)। अन्तस्तलन्तु झर्झरास्थ्नः कोटरद्वारपिधानभूतम् ।

चतस्रश्चास्य धाराः,—तत्र ऊर्द्ध्वधारायां सन्धीयते पुरःकपालास्थि, अधोधारायामग्रतः अङ्कुशाकारप्रवर्द्धनेन शुक्तिका, पुरोधारायामूर्द्ध्वहन्वस्थ्नो नासाकूटम्, पश्चिमधारायां झर्झरकस्य नेत्रपार्श्वपीठम् ।

## अथ गण्डास्थिनी ।

**गण्डास्थिनी[3]** द्वे वाणाग्रफलकसदृशाकारे गण्डयोः ( ४०श चित्रम् )। ताभ्यां निर्म्मीयेते गण्डोत्सेधौ, भूमी च नेत्रकोटरयोरंशतः । तयोरेकैकस्य द्वे तले—बहिस्तलमन्तस्तलञ्चेति । तत्र—

---

१ Lachrymal Bones. २ Nasal Duct. ३ Malar Bones. गण्डास्थीति सुश्रुतकृताख्या । चरके त्वस्यैव गण्डकूटसंज्ञा ।

११

## [ ४०श चित्रम्—गण्डास्थि ( वामम् ) ] ।

( बहिस्तलम् ) .




( अन्तस्तलम )



**बहिस्तलं** न्युनपृष्ठम् **गण्डकूट**[१]निर्म्मापकम्। तत्र च्छिद्रं गण्ड-च्छिद्रं[२] ताम नाड़ी-धमनीनिर्गमाय।

**अन्तस्तलं** कोरोदरम्, तत्र बन्धुरत्रिकोणांशे ऊर्द्ध्वहन्वस्थ्नो गण्डधर-कूटस्य सन्धानम्।

चत्वारि चैककस्मिन् गण्डास्थि प्रवर्द्धनकानि, तेषु त्रीणि क्रमात् पुरः पश्चि-मोर्द्ध्वकोटिभूतानि, एकमक्षिकोटरभूमिप्रविष्टम्। तत्र—

(१) **पुरःप्रवर्द्धनं** सूच्माग्रं नेत्राधरीयं[३] नाम, ऊर्द्ध्वहन्वस्थ्ना सन्धेयम्।

(२) **पश्चिमप्रवर्द्धनं** शङ्किकं[४] नाम शङ्खास्थ्नो गण्डप्रवर्द्धनेन सन्धायि।

(३) **ऊर्द्ध्वप्रवर्द्धनम्**[५] अपाङ्गप्रवर्द्धनं नाम अग्रकपालस्य बाह्यकोणेन सन्धिमत्।

(४) **अक्षिफलकम्**[६] अक्षिकोटरभूमेरंशभूतमीषत्खातोदरम् ऊर्द्ध्वपुरः-प्रवर्द्धनयोर्मध्यस्थम्। तत्र च शङ्खगण्डिकाख्यो[७] रन्ध्रमार्गो गण्डच्छिद्रान्तो नाड़ी-प्रवेशाय। धारा चास्य पश्चान्मुखी जतूकास्थ्ना सन्धायिनी।

अधःकोटिस्तु गण्डास्थ्नो न केनापि सन्धायिनी। अनुभूयते च सा सगण्डकूटा त्वचोऽधस्तात्।

**सन्धानस्त्वे**वमेकैकस्य गण्डास्थ्नश्चतुर्भिरस्थिभिर्द्रष्टव्यम्। श्लोकश्चायं तत्स्मरणार्थः—

शङ्खेनाग्रकपालेन चोर्द्ध्वहन्वा जतूकया।
एकैकमिह गण्डास्थि चतुर्भिर्दृढसंहितम्॥

**पेश्यः** पुनरत्र निविशन्ते पञ्च। तद्यथा—बहिस्तले ओष्ठसमुत्कर्षणी,[८] सृक्कणीकर्षणी[९] लघ्वी गुर्व्वी चेति तिस्रः। अन्तस्तले—शङ्खच्छदा,[१०] हनुकूटकर्षणी[११] चेति द्वे।

---

१ Malar Tuberosity. २ Malar Foramen. ३ Infra-orbital Process. ४ Zygomatic Process. ५ Frontal Process. ६ Orbital Process. ७ Tempro-Malar Canal. गण्डच्छिद्रञ्च क्वचिद् युग्मं दृश्यते। ८ Levator Labii Superioris. ९ Zygomaticus minor and major. १० Temporal. ११ Messeter.

# अथ ताल्वस्थिनी ।

**ताल्वस्थिनी**[1] द्वे (४१श चित्रम्) तनुपत्रकनिर्म्मिते नेत्र-नासास्य-कुहराणां पश्चिमस्थे खनित्राकारे[2]। ते च नेत्रकोटरभूमेर्नासाभूमिपार्श्वयोस्तालु-पटलस्य च निर्म्माणसहायभूते। तयोरेकैकस्य द्वौ भागौ प्रतनुपत्रकमयौ—दीर्घपत्रकं ह्रस्वपत्रकञ्चेति। तत्र—

[ ४१श चित्रम्—ताल्वस्थि ( वामम् ) ]

( पश्चिमतोदृष्टम् )




(१) **दीर्घपत्रकं**[3] नेत्रकोटरान्तात्तालुमूलं यावदालम्बितम्।

तस्य पुरोधारा ऊर्द्ध्वहन्वस्थिपिण्डस्य पश्चात् सन्धेया, पश्चिमधारा तु द्विमुखी जतूकास्थ्नश्चरणफलकयोरन्तराले सन्धायिनी। तस्यान्तस्तलं मसृणं समुन्नता-भ्यामालिकाभ्यां त्रिभागविभक्तञ्च। तत्र ऊर्द्ध्वतनी आलिका उत्तरालिका[4] नाम, तत्र सन्धीयते झर्झरास्थ्नोऽवयवो मध्यशुक्तिकाख्यः। अधस्तनी तु आलिका अधरालिका[5] नाम, तत्र शुक्तिकास्थ्नः सन्धानम्। अनयोश्च मध्यस्थः प्रदेशो नासा-पथस्य मध्यसुरङ्गयाऽनुषज्यते; तदूर्द्ध्वाधरौ तु प्रदेशौ ऊर्द्ध्वाधरसुरङ्गाभ्याम्।

१ Palate Bones. २ खनित्रं भूमिखननयन्त्रं ( कोदाल वा कुदालि—इति भाषा ), Spade. ३ Vertical Plate. ४ Superior Turbinated Crest. ५ Inferior Turbinated Crest.

बहिस्तलन्तु दीर्घपत्रकस्य पश्चिमतालुकाख्यया[१] सूक्ष्मपरिखयाङ्कितम् ऊर्द्ध्व-हन्वस्थ्न आन्तरतलेन सन्धेयञ्च ।

अथास्य दीर्घपत्रकस्य चूड़ायां द्वे प्रवर्द्धनके पुरःपश्चिमप्रसृते । तयोः पुरोगं[२] नेत्रकोटरभूमिप्रवेशि, तस्य जतूका-झर्झरकोर्द्ध्वहन्वस्थ्नां नेत्रपीठफलकैः सन्धानम् । पश्चिमगं[३] जतूकास्थिसन्धायि । सन्धौ चानयोः खातं तालुजातूकं[४] नाम, तेन नाड़ी-धमनीनां नासाभ्यन्तरतः प्रवेशः ।

(२) ह्रस्वपत्रकं[५] नाम दीर्घपत्रकस्य मूलादुद्गतमन्तर्मुखं पत्रकम् । तस्योर्द्ध्वतलं नासाभूमिः, अधस्तलञ्च तालुपटलस्य पश्चिमभागनिर्म्मापकम् । पुरोधारा ऊर्द्ध्वहन्वस्थ्नस्तालुफलकेन सन्धायिनी, पश्चिमधारा तु मुक्तैव, कोमल-तालुधरा च, कण्टकञ्चात्र काकलकधरम्[६] ।

ह्रस्वदीर्घपत्रकयोः सन्धानकोणस्तु तालुकोणाख्यः ।

तच्च पत्रकम् इतरताल्वस्थ्नो ह्रस्वपत्रकेणान्तर्धारायां सश्लिमत् । सन्धौ चानयो-रुपरिष्टात् परिखा सीरिकास्थ्नो दृढ़सन्धानाय ।

सन्धानञ्चैवं षड्भिरस्थिभिस्ताल्वस्थ्ना विज्ञेयम् । एष च तत्-संग्राहकः श्लोकः ।

झर्झरञ्च जतूका च शुक्तिका चाथ सीरिका ।
स्वसंज्ञञ्चोर्द्ध्वहन्वस्थि ताल्वस्थ्ना संहितानि षट् ।

पेश्यः पुनरत्र संयुज्यन्ते चतस्रः,—उत्तरा कण्ठसंकोचनी[७], अधरा हनु-कूटकर्षणी[८], काकलकिनी[९], तालूत्तंसनी[१०] चेति ।

## अथ शुक्तिकास्थिनी ।

शुक्तिकास्थिन्यौ[११] द्वे—(४८श चित्रान्तर्द्दृश्ये) प्रतनुशुषिरपत्रमये क्षुद्रशुक्तिका-कारे, नासागुहायां निम्नमध्यसुरङ्गयोर्मध्यस्थे । ते च झर्झरकास्थ्नः शुक्तिका-फलकापेक्षया निम्नस्थे—इति तयोः क्वचित् अधःशुक्तिका-संज्ञापि ।

---

१ Posterior Palatine Canal. २ Orbital Process. ३ Sphenoidal Process. ४ Spheno-palatine Notch. ५ Horizontal Plate. ६ Uvula. ७ Superior Constrictor of Pharynx. ८ Internal Pterygoid. ९ Azygos Uvulæ. १० Tensor Palati ११ Inferior Turbinated Bone.

एकैकयोश्च शुक्तिकयोः द्वे तले—अन्तस्तलं बहिस्तलञ्च । तत्राद्यं कोरोदरं नासापथस्य निम्नसुरङ्गानिर्म्मापकम्, द्वितीयं न्युब्जपृष्ठं नासामध्यप्राचीराभिमुखम् ।

अस्याश्चोर्द्ध्वधारा पुरोभागे ऊर्द्ध्वहन्वस्थ्ना सन्धायिनी, पश्चिमभागे च तात्वस्थ्ना । द्वे च तत्र प्रवर्द्धनके अश्रुकूटक-झर्झरकूटकसंज्ञे[1],--तयोराद्यं सन्धीयते अश्रुधरास्थ्ना, द्वितीयन्तु झर्झरास्थ्ना । अधोधारा पुनरस्या विमुक्ताग्रा । एष चास्याः सन्धिस्मारकः श्लोकः ।

झर्झरेणोर्द्ध्वहन्वस्थ्ना ताल्वस्थ्ना चाश्रुधारिणा ।
चतुर्भिरूर्द्धमिव स्यात् शुक्तिका दृढ़संहिता ॥

## अथ सीरिका ।

**सीरिका[2] सीराग्रिका** वा नाम (४२श चित्रम्) नासाखातस्य पश्चिमभागे मध्यप्राचीरभूतमस्थिफलकं सीराग्रसदृशाकारं प्रतनुपत्रमयम् । अस्याश्चाग्रधारायां संयुज्यते झर्झरकास्थ्नो मध्यफलकं नासाग्रप्राचीरभूतं, त्रिकोणतरुणास्थि च । पश्चिमधारा त्वस्याः गलविवराभिमुखी विमुक्ताग्रैव[3] । अधोधारा चास्या ऊर्द्ध्वहन्वस्थ्नोस्ताल्वस्थ्नोश्च परस्परसन्धानरेखायां संहितेति, तत्रास्थिचतुष्टयेन सन्धिः । उर्द्ध्वधारा तु परिखाङ्किता तटद्वयोपलक्षिता च, तत्र जतूकास्थ्नो निम्नतलस्थया रसनिकाख्यरेखया सन्धिः ।

[ ४२श चित्रम्—सीरिकास्थि ] ।




१ Lachrymal & Ethmoidal Processes. २ Vomer. ३ न केनापि संहितेत्यर्थः ।

पार्श्वयोश्च सौरिकास्थ्नः सूक्ष्मे परिखे[1] नासातालुकाख्यनाड्योर्धारणाय । अयञ्चास्य सन्धिस्मारकः श्लोकः ।

ऊर्द्ध्वहन्वस्थियुगलं तालुयुग्मञ्च झर्झरम् ।
जतूका चेति षट्केन संहिता सौरिका दृढ़म ॥

## अथ अधोहन्वस्थि ।

अधोहन्वस्थि[2] (४३श चित्रम्) तावदेकमधोदन्तपंक्तिधारणं मुखमण्डलास्थिषु बृहत्तमं दृढ़तमञ्च । तस्य द्वौ भागौ,—हनुमण्डलं नामाश्वखुराकारोभागः, हनुकूटद्वयञ्च तुङ्गोर्द्ध्वगं हनुसन्धिप्रविष्टमुभयतः । तत्र—

(१) **हनुमण्डलम्**[3] अधस्तनदन्तोदूखलधारकं मुखमण्डलाधःसीमसम्पादकम । तच्च बाल्ये पृथगवस्थितयोर्वामदक्षिणार्द्धयोश्चिबुकदेशे संहितयोरेकीभावान्निष्पन्नमिति तत्त्वज्ञाः । तस्य च द्वे तले,—बाह्यतलमान्तरतलञ्चेति, द्वे च धारे—ऊर्द्ध्वधारा अधोधारा चेति ।

तत्र बाह्यतले चिबुकदेशे उत्सेधश्चिबुकपिण्डं[4] नाम । तदुभयतः अधरोत्क्षेपण्योः[5] पेश्योर्निवेशः । ततश्च समुद्गता सन्धानाङ्कभूता रेखा चिबुकसन्धानिका[6] नाम ।

---

१ Naso-palatine Grooves. २ Inferior Maxillary Bone. ३ Horizontal Portion or Body. ४ Mental Process. ५ Levator Labii Inferioris. ६ Symphysis menti.

[ ४२श चित्रम्—अधोहन्वस्थि । ]

( वाह्यदृश्यम् )



तदुभयतश्च पश्चाद् विवरे अनुचिवुकाख्ये[1] तदाख्यनाड़ी-सिरा-धमनीनां प्रवेशाय। तयोरेकैकस्य मूलतस्तिर्य्यक्-पश्चिमाभिमुखा रेखा बाह्यतिरश्चीना[2] नाम,— तदुपकण्ठे च निविशेते अधरावनमनी,[3] सृक्कणीनमनी[4] चेति पेश्यौ, तदधस्ताच्च अधोधारासमीपे गलपार्श्वच्छदा[5] नाम पेशी।

आन्तरतलं तावदीषत्कोरोदरं सर्व्वत्रैव, तत्र मध्यरेखामुभयतो द्वे द्वे कलायके—रसनाकलायके[6] नाम। तत्र पेशीचतुष्टयस्य संयोगः। तन्मूलतश्च तिर्य्यगूर्द्ध-पश्चाद्गता रेखा आन्तरतिरश्चीना[7] नाम, सेयं मुखभूमिकण्ठिकाख्यपेश्याः[8] प्रभवभूता। अस्याश्चोपरिष्टात् पुरोभागे खातं जिह्वाधरिकाख्य[9]ग्रन्थिधारणाय। अपरञ्चास्या अधस्तात् पश्चिमतः खातं हन्वधरीयं[10] नाम तदाख्यग्रन्थिधारणाय।

ऊर्द्धधारा तावत् हनुमण्डलस्य दन्तोदूखलमण्डलधरा। दन्तोदूखलानि च बाल्ये पञ्च पञ्च एकैकार्द्धे, अष्टाष्टौ च यौवने। विलीयन्ते च तानि वार्द्धके। पश्चार्द्धयोश्च तत्र निविशेते कपोलिकाख्ये[11] पेश्यौ। दन्तास्तु समग्रकरोटिवर्णने वर्णनीयाः।

अधोधारा पुनः स्थूलाग्रा त्वङ्मात्रावरणा च। तस्याः पश्चिमप्रान्तयोर्नातिगभीरे परिखे वक्त्रधमनीपरिखे नाम वक्त्रधमन्यो[12] र्धारणाय।

(२) हनुकूटद्वयं[13] नाम हनुमण्डलस्य पश्चिमप्रान्ताभ्यामुद्गतं चतुरस्रप्रायं प्रवर्द्धनद्वयम्। तदेव हनुमूलवन्धनसंज्ञमिति प्राञ्चः[14]।

एकैकस्य च हनुकूटस्य द्वे शिखरे,—पुरस्तात् हनुकुन्तः, पश्चिमतो हनुमुण्डश्चेति। द्वे च तले—बाह्यमाभ्यन्तरञ्चेति। चतस्रश्च धाराः—पूर्व्व-पश्चिमोत्तराधराः।

---

१ Mental Foramina. २ Ext. Oblique line. ३ Depressor Labii Inferioris. ४ Depressor Anguli Oris. ५ Platysma Myoides. ६ Genial Tubercles. ७ Internal Oblique line. ८ Mylo-hyoid. ९ Sublingual Gland. १० Submaxillary Gland. ११ Buccinator. १२ Facial Arteries. १३ Rami of Lower Jaw. १४ चरकमतेयं संज्ञा।

तत्र **हनुमुण्डं**[1] नाम वर्त्तुलप्रायं पश्चिमशिखरं शङ्खास्थ्नो हनुसन्धिखात-प्रवेशि । तन्मूलञ्च परितः सम्बध्यते स्नायुकोषः । अभ्यन्तरतले चास्य मूलतो निविशते हनुमूलकर्षणी उत्तरा[2] नाम पेशी ।

**हनुकुन्तो**[3] नाम त्रिकोणप्रायं कुन्ताग्रसदृशं पुरःशिखरं हनुकूटस्य । तत्र निविशते बाह्याभ्यन्तरतलयोः शङ्खच्छदाख्या पेशी ।

बहिस्तले पुनर्हनुकूटस्य निविशते हनुकूटकर्षणी[4] नाम पेशी । अन्तस्तले च हनुमूलकर्षणी अधरा[5] । मध्ये चान्तस्तलस्य स्फुटं विवरम् अधराया दन्तमूल-सुरङ्गाख्यायाः प्रणाल्या द्वारभूतम्[6], तेन अधरदन्तमूलिकाख्यानां सिरा-धमनी-नाड़ीनां प्रवेशः[7] ।

अथास्य हनुकूटस्य **ऊर्द्ध्वधारा**[8] अर्द्धचन्द्राकारा, तद्द्वारेण हनुकूट-कर्षण्याख्यपेशीमभितः प्रसरन्ति नाड्यः सिरा-धमन्यश्च । **अधोधारा** तावत् हनुमण्डलाधोधारया सानुबन्धा । कोणश्च तत्र पश्चिमतो हनुकोणो[9] नाम—तत्र हनुकोणिकाख्यस्नायोः संयोगः । **पुरोधारा** तन्वी पेशीनिगूढ़ा च । **पश्चिमधारा** पुनः स्थूला कर्णमूलिकाख्य[10]ग्रन्थि-समाच्छन्ना च ।

**सन्धानं** पुनरधोहन्वस्थ्नः शङ्खास्थ्नोर्हनुसन्धिखाताभ्यां परिज्ञेयम् ।

**पेश्यस्त्विह** निविशन्ते पञ्चदश युग्माः यथोक्ताः ।

एतावांश्च अधोहन्वस्थ्नि लक्ष्यो विशेषः, यथा बाल्ये हनुकूटयोर्हनुमण्डलं प्रति तिर्य्यङ्निविष्टयोः क्रमाद् यौवने ऋजुभावः, वार्द्धके च पुनर्विशेषत-स्तिरश्चीनता दन्तोदूखलविलय[11]श्चेति ।

तान्येतानि मुखमण्डलास्थीनि व्याख्यातानि ।

## अथ कण्ठिकास्थि ।

**कण्ठिकं जिह्वामूलिकं**[12] वा नाम ( ४४श चित्रम् ) रसनामूलग-मश्वखुराकारमस्थिखण्डं नानापेशीनिवेशभूमिभूतं कण्ठे श्वासपथस्य पुरस्ता

१ Condyle of Lower Jaw. २ Ext. Pterygoid. ३ Coronoid Process. ४ Masseter. ५ Internal Pterygoid. ६ Opening of Internal Dental. Canal. ७ Inferior Dental Vessels and Nerve. ८ Sigmoid Notch. ९ Angle of Lower Jaw. १० Parotid Gland. ११ अतएव वार्द्धके अधोहनोरग्रतःप्रसरो वक्रविकृतिविशेषश्च । १२ Hyoid Bone,

दवस्थितम्। तच्च शून्यलम्बितमिव वर्त्तते सुदीर्घस्नायुरज्जुभ्यां शङ्खास्थ्नोर्मूलशिफाद्वयप्रतिबद्धम्। तस्य च त्रयो भागाः—कण्ठिकपिण्डं, महाशृङ्गद्वयं, लघुशृङ्गद्वयञ्चेति। तत्र—

## (४४श चित्रम्—कण्ठिकास्थि)




चित्रव्याख्या—

१ कण्ठिकपिण्डम्। २, २, लघुशृङ्गद्वयम् ३, ३, महाशृङ्गद्वयम्। पेशीनिवेशास्तु—पे १ चिबुककण्ठिका। पे २, उरःकण्ठिका। पे ३, मुखभूमिकण्ठिका। पे ४, अंसकण्ठिका। पे ५, शिफाकण्ठिका। पे ६, अवटुकण्ठिका। पे ७, चिबुकजिह्वाकण्ठिका। पे ८, जिह्वाकण्ठिका। पे ९, मध्यमा कण्ठसङ्कोचनी।

(१) कण्ठिकपिण्डं[1] नाम मध्यस्थं पिण्डं मध्यरेखाङ्कितम् (चित्रे १)। तत्र पुरस्तले निविशन्ते द्वादश पेश्यः (षट् एकैकतः)। ताः क्रमात् चिबुककण्ठिका[2], उरःकण्ठिका[3], चिबुकजिह्वाकण्ठिका[4], मुखभूमिकण्ठिका[5], शिफाकण्ठिका[6], अंसकण्ठिका[7] चेति नाम। पृष्ठतलन्त्वस्य मसृणं कलासम्बद्धञ्च गोजिह्विकया[8]।

(२) महाशृङ्गद्वयं[9] नाम मध्यपिण्डमुभयतः पश्चिमाभिमुखं स्वनामव्याख्यातम्। तयोरग्रकोट्योः स्फुटे अर्बुदके स्नायुरज्जुसंयोगाय। तयोरेकैकस्मिन् निविशन्ते तिस्रः पेश्यः,—क्रमात् मध्यमा कण्ठसंकोचनी[10], जिह्वाकण्ठिका[11], अवटुकण्ठिका[12] चेति।

(३) लघुशृङ्गद्वयं[13] महाशृङ्गयोः क्रोड़स्थम्। तदग्रकोट्योरपि स्नायुरज्ज्वोः शङ्खास्थिशिफाद्वयसङ्गतयोः संयोगः।

तान्येतानि शिरोग्रीवास्थीनि पृथग् व्याख्यातानि।

---

१ Body or Basihyal. २ Genio-hyoid. ३ Sterno-hyoid. ४ Genio-hyo glossus. ५ Mylo-hyoid. ६ Stylo-hyoid. ७ Omo-hyoid. ८ गोजिह्विका नाम जिह्वामूलस्थं श्वासपथच्छादनशीलं तरुणास्थिपत्रकमग्रे वक्ष्यमाणम्। चरककृतेयं संज्ञा (Epiglottis). ९ Greater Cornua. १० Middle Constrictor of Pharynx. ११ Hyo-glossus. १२ Thyro-hyoid १३ Lesser Cornua.

# अथ समग्रकरोटिदृश्या विशेषाः।

करोटिर्नाम[1] सकलशिरोऽस्थ्नां सङ्घातः। शिरोस्थीनि च सर्व्वाणि अधोहनुवर्ज्जं स्थिरसन्धिसंहितानि। विशेषाश्चात्र सङ्घातदृश्या बहवः, तेषु केचित् सूचितपूर्व्वाः। तानेवेदानीमपरांश्च विशेषान् करोटौ यथावस्थितान् प्रतिपादयामः शिष्यबुद्धिवैशद्याय शिरोगतविशेषावबोधार्थं[2] च।

आदौ तावत् करोटेः पञ्च प्रदेशाः पृथग् बोद्धव्याः। तद्यथा—ऊर्द्ध्वप्रदेशः करोटिपटलं नाम, अधःप्रदेशः करोटिभूमिर्नाम, पार्श्वप्रदेशौ करोटिपक्षौ नाम, पुरःप्रदेशश्च मुखमण्डलं नामेति।

अपरे च नेत्रनासागुहाद्या विशेषाः शेषतः प्रतिपाद्याः।

## अथ करोटिपटलम्।

करोटिपटलं[3] नाम (४५ चित्रम्) शिरःसम्पुटस्यच्छदिभूतो भागः। तस्य निर्म्माणमग्रतः पुरःकपालस्य ललाटफलकेन, पार्श्वयोः पार्श्वकपालाभ्यां, पश्चिमतश्च पश्चिमकपालस्य ऊर्द्ध्वार्द्धेन।

तस्य च द्वे तले—बाह्यमाभ्यन्तरञ्च। तत्र—

बाह्यतलं कूर्म्मपृष्ठाकारम्। तत्र लक्षणीयाः पञ्च सीमन्ताः,—पुरःसीमन्तो, मध्यसीमन्तः, पश्चिमसीमन्तः, पार्श्वसीमन्तौ च द्वाविति। तेषु—

पुरःसीमन्तो[4] नाम पुरःकपालस्य पार्श्वकपालाभ्यां सन्धानरेखा पुरोदृश्या।

मध्यसीमन्तो[5] नाम पार्श्वकपालयोः परस्परसन्धिरेखा मध्यस्था।

---

१ Skull, २ सन्ति खल्वेवंविधा बहवो विशेषाः सीमन्तादयो ये समग्रकरोटावेव सम्यग्दृश्याः इति।
३ Roof of the Skull. ४ Coronal Suture. ५ Sagittal Suture.

[ ४५श चित्रम्—करोटिपटलम् ( स्तनन्धयशिशोः ) । ]




पश्चिमकपालम्

**पश्चिमसीमन्तो**[1] नाम पश्चिमकपालस्य पार्श्वकपालाभ्यां सन्धानरेखा पश्चाद्दृश्या ।

**पार्श्वसीमन्तौ**[2] नाम करोटिपटलस्य पार्श्वस्थे सन्धानरेखे । तयोरेकैका अस्थिषट्कस्य सन्धानाङ्गभूता । तथाह्यत्र उपरिस्थानि त्रीणि पुरः-पार्श्व-पश्चिमाख्यानि कपालानि अधःस्थैस्त्रिभिः गण्ड-जतूका-शङ्खास्थिभिः संहितानि । ( सन्धिप्रकारस्तु २७श चित्रे द्रष्टव्यः ) ।

बाल्ये तु **गूढ़सीमन्तिका**[3] नाम पुरःकपालमध्यस्था दृश्यते सूक्ष्मा सीमन्तरेखा । सा क्वचित् प्रौढ़करोटावपि दृश्या ।

अथात्र द्वौ सीमन्तसन्धी विशेषतो लक्ष्यौ पुरःपश्चिमस्थौ । तत्र पुरोमध्यसीमन्तयोः सन्धिस्थलं **ब्रह्मरन्ध्रं ब्रह्मतालुकं**[4] वा नाम । पश्चिममध्यसीमन्तयोस्तु सन्धिस्थलं **शिवरन्ध्रं अधिपतिरन्ध्रं**[5] वा नाम, तदाख्यमर्म्मधारणात् । अनयोश्च दृश्यते विशेषतः कोमलता, ब्रह्मरन्ध्रे चतुरस्रप्रायता, शिवरन्ध्रे च त्रिकोणता, स्तनन्धयशिशोः करोटौ स्वभावतः ।

पञ्च चात्र उत्सेधाः—

पुरःकुम्भद्वयं[6], पार्श्वकुम्भद्वयं[7], पश्चिमार्व्बुदश्चेति[8] । ते व्याख्यातपूर्वाः ।

**आन्तरतलं** तावत्करोटिपटलस्य खातोदरं किञ्चिदुच्चावचञ्च मस्तिष्कच्छादनाय । तत्र सर्व्वतो दृश्याः कलापोषणीनां धमनीनां प्रतानाङ्काः, खातानि[9] च कलाग्रन्थिधारणाय । मध्यरेखायान्तु **दीर्घिकाख्या सिरापरिखा**[10] मध्यसीमन्तानुपूर्व्वाऽभ्यन्तरतः ।

---

१ Lambdoid Suture, २ Temporal Suture. ३ Metopic Sutre. ४ Anterior Fontanelle. ५ Posterior Fontanelle. तथाहि सुश्रुत :—"मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो रोमावर्त्तोऽधिपति स्तत्र सद्योमरणम्" (सु० शा० ६अ० ) । ६ Frontal Eminences. ७ Parietal Eminences ८ Ext. Occipital Protuberence. ९ Depressions for Pacchionian Bodies. १० Longitudinal Sinus.

# अथ करोटिभूमिः।

**करोटिभूमिर्**[1]नाम करोटेरधःप्रदेशो नानास्थिसङ्घातमयः सर्व्वत उच्चावचः। तस्या द्वे तले,—ऊर्द्ध्वतलं शिरोगुहान्तर्निगूढं **करोटिपीठं मस्तिष्कपीठं** वा नाम, अधस्तलं मुखकण्ठविवरच्छदिभूतं शिरोगुहाबाह्यञ्च **करोटिभूमितलं करोटितलं** वा नामेति।

निर्म्माणं पुनः करोटिभूमेर्दशभिरस्थिभिर्द्रष्टव्यम्। तद्यथा—पुरोभागे ऊर्द्ध्वहन्वस्थिभ्यां तालवस्थिभ्याञ्च। पश्चिमभागे पश्चिमकपालेन। मध्यभागे झर्झरक-जतूका-सीरिकास्थिभिः। पार्श्वयोस्तु शङ्खास्थिभ्यामिति। सन्धानाङ्कास्तत्र तत्तदस्थ्नामन्तर्बहिस्तलयोः संलक्ष्या विशेषेण। तत्र—

## [ करोटिपीठम् ]

**करोटिपीठं मस्तिष्कपीठं**[2] वा नाम (४६श चित्रम्) करोटिभूमेरूर्द्ध्वतलं मस्तिष्कादिधारणाय खातोदरम्। तच्च करोटिपटलापसारणेन[3] दृश्यम्। खातानि चात्र त्रीणि महाखातानि[4] नाम। तेषां पुरोगं मस्तिष्कस्य पुरःपिण्डधारणाय। मध्यगं मध्यपिण्डधारणाय। पश्चिमगं पश्चिमपिण्डधारणाय। तत्र—

**पुरोगं महाखातं**[5] पुरःकपालस्य नेत्रच्छदिफलकाभ्यां झर्झरास्थ्नश्चालनीपटलेन च तन्मध्यसंहितेन निर्म्मितं विशेषादुच्चावचम्। तस्य पश्चिमसीम्नि दृश्यते जतूकास्थ्नो लघुपक्षतिद्वयं, तन्मध्यस्थं त्रिकोणकण्टकञ्च।

तत्रैते विशेषा लक्षणीयाः—

(१) **दीर्घिकाख्या-सिरापरिखा**या अग्रभागः समुन्नतरेखारूपः। तत्र दात्रिकाख्यकलाभागसंयोगः[6]।

---

१ Base of Skull. २ Internal surface of the Base of the Skull. ३ भ्रुवोरनुक्रमेण पूर्व्वापरच्छेदात् करोटिच्छदिभागस्य अपसारणम्। ४ Large Fossæ. ५ Anterior Fossa. ६ दात्रिका नाम मस्तिष्कावरण्या महाकलाया दात्राकारो भागो मस्तिष्कस्य वामदक्षिणांशविभाजक—इति मस्तिष्कवर्णनावसरे वक्ष्यते। (दात्रिका = Falx Cerebri).




चित्रद्वयस्य संयोगात् विज्ञेया पूर्णता बुधैः ।

-भूमेरूर्द्ध्वं तलम् (करोटिपीठं नाम) ] (दक्षिणार्द्धम्)




एकैकार्द्धे यथा यत् स्यादन्यार्द्धेऽपि तथैव तत् ॥

(२) **शिखरकण्टकं**[१] नाम झर्झरास्थिचूड़ास्थितं प्रवर्द्धनं वर्णितपूर्वम् ।

(३) **चालनीपटलं**[२] बहुच्छिद्रमयं गन्धग्राहिण्योः प्रथमाख्यनाड्योर्धारणाय, छिद्राणि च तत्र तत्प्रताननिर्गमाय ।

(४) **धमनीप्रतानाङ्काः**[३]—पुरोगाया मस्तिष्ककलापोषण्या धमन्या धारणाय ।

**मध्यमं महाखातम्**[४] उभयतो गभीरं मध्यतश्च समुन्नतम् । तस्य पुरःसीम्नि जतूकास्थ्नो लघुपक्षतिद्वयं त्रिकोणकण्टकसहितम् । पश्चिमसीम्नि तु तस्यैव सुषुम्नापीठं मध्यतः, उभयतश्च शङ्खास्थ्नोरश्मतटिके । निर्म्मीयते च तत् मध्यभागे जतूकास्थ्नः शरीरेण, पार्श्वयोस्तु तस्यैव बृहत्पक्षतिभ्यां शङ्खास्थिभ्याञ्च । तत्र चेते विशेषाः संलक्ष्याः—

(१) **दृष्टिनाड़ीपरिखा** मध्यतस्तदुभयतश्च दृष्टिनाड़ीरन्ध्रे[६] दृष्टिग्राहिण्यो द्वितीयाख्यनाड़ीद्वयस्य[७] चाक्षुषधमनीभ्यां[८] सहितस्य धारणनिर्गमार्थम् ।

(२) **पक्षान्तरालाख्यं**[९] त्रिकोणविवरद्वयं व्याख्यातपूर्व्वम् । तेन तृतीय-चतुर्थ-षष्ठनाड़ीयुगलानां, पञ्चमनाड़ीयुगलस्य नेत्रगाख्यशाखयोः, शिराधमनीनाञ्च नेत्रगानामक्षिगुहयोः प्रवेशः ।

(३) **पोषणिकाखातं**[१०] पोषणिकाख्यग्रन्थिधारणम् ।

(४) **वृत्तविवरद्वयं**[११] **जाम्बवविवरद्वयञ्च**[१२] क्रमात् पञ्चमाख्यनाड्या मध्यमशाखाद्वयस्य पश्चिमशाखाद्वयस्य च निर्गमार्थम् ।

(५) **मातृकापरिखे**[१३] मातृकाधमन्योर्नेत्रकूटगनाड़ीसहितयोर्धारणाय ।

(६) पञ्चमनाड्योर्ग्रन्थिधारणार्थं खातद्वयं **त्रिधारग्रन्थिखातसंज्ञं**[१४] शङ्खास्थ्नोरश्मकूटाग्रयोर्द्देश्यम् ।

---

१ Crista Galli. २ Cribriform Plate for the First or Olfactory Nerves. ३ Markings of Anterior Meningeal Arteries. ४ Middle Fossa. ५ Sella Turcica. ६ Optic Foramina. ७ द्वितीयाख्यनाड्यौ दृष्टिनाड्यौ = Optic Nerves. ८ Ophthalmic Arteries. ९ Foramen Lacerum Anticus. १० Pituitary Fossa. ११ Foramina Rotunda. १२ Foramina Ovale. १३ Carotid Canals. १४ त्रिधारग्रन्थिर्नाम पञ्चमनाड्या धारात्रयस्य मूलस्थो ग्रन्थिर्यथास्थानं वर्णनीयः (= Gasserian Ganglion), तद्धारणार्थमिदं खातमिति तथा संज्ञा ।

(७) **धमनीप्रतानाङ्काश्च**[1] मध्यमायाः कलापोषख्याख्यधमन्या धारणाय ।

**पश्चिममहाखातं**[2] पुनरतिगभीरं बृहत्तमञ्च । तत्राधीयन्ते मस्तिष्कस्य पश्चिमं पिण्डमनुमस्तिष्कं सुषुम्नाशीर्षकञ्च । निर्म्मीयते च तत् स्तोकमात्रेण जतूकाशरीरेणाग्रतः, पश्चिमकपालेन मध्यतः, पार्श्वयोः शङ्खास्थिभ्यां पार्श्वकपालयोः पश्चिमाधरकोणाभ्याञ्च । विभागश्चास्य मध्यममहाखातादश्मतटिकाभ्याम्[3] । अश्मतटिकयोस्तु जवनिकाख्यस्य[4] मस्तिष्कविभाजककलाभागस्य संयोगः ।

एते च पश्चिममहाखाते द्रष्टव्या विशेषाः—

(१) **सुषुम्नापीठं**[5] वर्णितपूर्व्वं मध्यतः ।

(२) **कर्णान्तर्द्वारम्**[6] ( एकैकतः ) श्रुतिवहाख्यनाड़ीद्वयप्रवेशाय ।

(३) **महाविवरं**[7] मध्यस्थं सशीर्षकसुषुम्नानिर्गमाय ।

(४) **मूलकोटिपुरोगं**[8] विवरम् ( एकैकतः ) द्वादशनाड्याः प्रवेशाय ।

(५) **मन्याविवरम्**[9] ( एकैकतः ), तच्च पश्चिमकपालपार्श्वस्थमन्याखातमेव शङ्खास्थिसन्धानेन विवरभूतम् । तेन मन्याख्यस्थूलसिराया नवम-दशमैकादशाख्यनाड़ीनाञ्च निर्गमः, प्रवेशश्च धमनीद्वयस्य शिरोऽन्तः ।

(६) **पार्श्विकाख्या सिरापरिखा**,[10] तत्प्रान्तस्था चापरा तदनुषङ्गिनी **अर्द्धचन्द्रिकाख्या**[11] मन्याविवरान्ता । तत्र च द्रष्टव्यं **गोस्तनच्छिद्रम्**[12] तत्परिखाप्रवेशि-सिराधारणाय ।

(७) **दीर्घिकाख्य-सिरापरिखायाः**[13] पश्चिमप्रान्तः, **महावर्त्तश्च**[14] ।

---

१ Grooves for the Branches of Middle Meningeal Arteries. २ Posterior Fossa. ३ Superior Borders of the Petrous portion of the Temporal Bones. ४ Tentorium Cerebelli. जवनिकावत् मस्तिष्कानुमस्तिष्कयोरन्तरालेऽवस्थानादियं संज्ञा । ५ Dorsum Epiphii. ६ Internal Auditory Meatus. ७ Foramen Magnum. ८ Anterior Condyloid Foramen. ९ Jugular Eossa. १० Lateral Sinus. ११ Sigmoid groove. १२ Mastoid Foramen. १३ Longitudinal Sinus. १४ Torcular Herophili.

## [ करोटीतलम् ]

**करोटितलं[१] करोटिभूमितलं** वा नाम (४७श चित्रम्) करोटिभूमेरधस्तलमतिमात्रमुच्चावचं मुखगलादिविवरच्छदिभूतम्। तस्य त्रयो भागाः—पुरोभागः ऊर्द्ध्वहनुमण्डलप्रधानस्तालुपटलधरः, मध्यभागः तालुमहाविवरयोरन्तरालस्थः कण्ठबिलच्छदिभूतः, पश्चिमभागः महाविवराद्युत्तरतोरणिकान्तः। तत्र—

(क) पुरोभागे लक्षणीये द्वे—दन्तोदूखलमण्डलं, तालुपटलश्चेति। तयोः—

**दन्तोदूखलमण्डलं[२]** दन्तोदूखलानां षोड़शानां धारणम्। दन्ता ह्यत्र एकैकार्द्धे अष्टौ, तद् यथा—कर्त्तनकाख्यौ[३] द्वौ मध्यरेखापार्श्वतः, तदन्वेको-रदनकाख्यः[४], तदनु द्वौ अग्रचर्व्वणकाख्यौ[५], चरमतश्च त्रयः पश्चिमचर्व्वणकाख्याः[६]। अष्टमस्य च चर्व्वणकस्य प्रसिद्धा **ज्ञानदशनसंज्ञा[७]**, तस्य यौवनान्ते प्रौढ़ौ वा समुद्गमः।

"राजदन्तौ[८]" इति तु—ऊर्द्ध्वहनुमण्डले मध्यरेखामुभयतः स्थितयोः कर्त्तनकदन्तयोः संज्ञा प्राचीना।

तदेतत् प्रौढ़स्योर्द्ध्वहनुमण्डलस्थं दन्तमण्डलं व्याख्यातम्। अधोहनुमण्डलेऽप्येवम्। एवञ्च साकल्येनोभयोर्हनुमण्डलयोः प्रौढ़स्य दन्ताः द्वात्रिंशत्।

बाल्ये तु एकैकस्मिन् हनुमण्डले दशैव दन्ताः—एकैकार्द्धे पञ्च पञ्चेति, पश्चिमचर्व्वनकानामभावात्[९]। एवञ्च साकल्येन बाल्येविनश्वरा दशना विंशतिरेव।

---

१ Base of the Skull. २ दन्तोदूखलानां धारणादूर्द्ध्वहन्वोर्मिलितयोर्दन्तोदूखलसमष्टेरियं संज्ञा (Alveolor Arch). ३ Incisors एकमूलौ चैतौ। ४ Canine. संयुक्तद्विमूलश्चायम्। ५ Bicuspids. द्विमूलौ चामू। ६ Molars. त्रिमूलाश्चैते। ७ Wisdom Tooth. लोकेऽपि "अक्कल दांत"—इत्येवमादिसंज्ञा। ८ "राजदन्तौ तु मध्यस्थावुपरिश्रेणिकौ क्वचित्"—इति हेमचन्द्रः। ९ द्वौ कर्त्तनकौ, एको रदनकः, द्वावेव च चर्व्वणकौ—इति पञ्चेति भावः।

**तालुपटलं**[१] नाम मुखविवरच्छदिभाग ऊर्द्ध्वहन्वस्थ्नोस्तालुफलकाभ्यां तात्वस्थ्नोश्च ह्रस्वपत्रकाभ्यां निर्म्मितः । तस्य च मध्यभागे परस्परसन्धानरेखा अनुलम्बा इतरया हनुतालुसन्धानाङ्करेखया अनुप्रस्थया लक्षिता । अनयोश्च मिलितयोः **स्वस्तिकसीमन्तिके**[२]ति संज्ञा । तत्र मध्यरेखायामग्रतः खातं चतुश्छिद्रम् **अग्रतालुखातं**[३] नाम । तस्य पूर्व्वापर[४]च्छिद्राभ्यां नासातालुकाख्यनाड़्यो, पार्श्व[५]च्छिद्राभ्यांच्च धमन्योः क्रमान्नासाभूमौ तालुपटले च प्रवेशः । अनुप्रस्थरेखायास्तु प्रान्तयोरेकैकतश्छिद्रे **पश्चिमतालुविवरे**[६] नाम, ताभ्यां तालुनाड्योस्तालुपटलप्रवेशः ।

पश्चिमप्रान्ते च मध्यरेखायां कण्टकं—**तालुपृष्ठकण्टकं**[७] काकलकण्टकं वा नाम, तत्र काकलक[८]स्य संयोग ।

( ख ) मध्यभागे पुनः करोटितलस्य लक्षणीयानि—

**कण्ठपटलं**[९] **गलबिलपटलं** वा नाम कण्ठबिलच्छदिभूतो भागः जतूकाशरीरस्य पश्चात्कपालमूलपिण्डेन सन्धानान्निष्पन्नः । तत्सन्धानरेखा चात्र स्फुटा **मूलजातूका**[१०] नाम, तस्याः पुरोभागे पश्चिमं नासागुहाद्वारं सौरिकास्थ्ना द्विधा विभक्तम्, तत्र चैकैकतः जतूकाचरणद्वयं तत्पार्श्वसीमभूतम् ।

**मन्याविवरञ्च** मन्याख्यसिराधारणम् । **मातृकासुरङ्गाद्वारञ्च** तद्‌बहिःस्थं मातृकाधमनीप्रवेशार्थम् ।

( ग ) पश्चिमभागे पुनः करोटिपटलस्य मध्यतः प्रधानतो लक्षणीयान्येतानि—

**महाविवरं** सुषुम्नाधारणं, **मूलकोटिद्वयञ्च** तदुभयतः चूड़ावलयाख्यकशेरुकया सन्धेयम् । प्रतिमूलकोटि च द्वे द्वे **विवरे** **पुरःपश्चिमस्थे** नाड़ीनिर्गमाय । **पश्चिमालिका, पश्चिमार्व्वुदञ्च** ग्रीवाधराख्यस्नायुरज्जुसंयोगाय । तदुभयतश्च द्वे द्वे रेखे **उत्तरतोरणिके** नाम वर्णितपूर्व्वे ।

---

१ Vault of the Palate. २ स्वस्तिकाकारेण रेखयोः परस्परसंयोगादियं संज्ञा, Crucial Suture. ३ Anteior Palatine Fossa. ४ Foramina of Scarpa. ५ Foramina of Stenson. ६ Posterior Palatine Foramina. ७ Spine of the Palate. ८ Uvula. ९ Roof the Throat. १० Basilar Suture.

( वामार्द्धम् ) [ ४७श चित्रम्—




चित्रद्वयस्य संयोगात् विज्ञेया पूर्णता बुधैः ।

( दक्षिणार्द्धम् )




एकैकार्द्धे यथा यत् स्यात् अन्यार्द्धेऽपि तथैव तत् ॥

एकैकस्मिंश्च पार्श्वे करोटितलस्य लक्षणीयान्येतानि--

गण्डोत्तरकूटं गण्डास्थि, गण्डप्रवर्द्धनकञ्चेति त्रयं **गण्डचक्रं**[१] नाम गण्डोत्तरखातस्य बहिःपरिधिभूतम्।

हनुसन्धिस्थालकं हनुमुण्डधारणार्थम्।

कर्णकुहरं कर्णबहिर्द्वारभूतम्।

गोस्तनप्रवर्द्धनकं शिफाप्रवर्द्धनकञ्च।

**सन्धानाङ्काश्चात्र** ऊर्द्ध्वहन्वस्थ्नो गण्डास्थ्ना जतूकाङ्गहत्पक्षत्या च, गण्डास्थ्न ऊर्द्ध्वहनुशङ्खजतूकाभिः, शङ्खास्थ्नश्च जतूकागण्डपश्चिमकपालैर्विशेषात् संलक्ष्याः।

**पेश्यः** पुनरिह करोटितलस्य एकैकार्द्धे संयुज्यन्ते बहवः। तासां नामसंख्यादीनि ४७श चित्रे द्रष्टव्यानि स्मर्त्तव्यानि च पूर्व्ववर्णनतः।

सैषा करोटिभूमिरुभयोस्तलयोर्व्याख्याता।

## अथ करोटिपक्षौ।

**करोटिपक्षौ**[२] नाम करोटिपार्श्वप्रदेशौ त्रिकोणप्रायौ आकृष्टधनुराकारौ वा (४८श चित्रम्)। तयोरेकैकस्योर्द्ध्वसीमा शङ्खतोरणिकानुगाधनुर्वक्रा रेखा अपाङ्गतः पश्चिमसीमन्तावधि प्रसृता। अधःसीमा त्वधोहनोः कोण एव। ऊर्द्ध्वसीमागायाश्च रेखायाः प्रान्तद्वयं चेत् संयोज्यते हनुकोणेन, तदा करोटिपक्षस्य पूर्व्वापरसीम्नोर्निर्द्देशः

एकैकस्य च करोटिपक्षस्य द्वौ भागौ,—पुरोभागः हनुसन्धिस्थालकस्य पुरःस्थः, पश्चिमभागस्तत्पश्चिमस्थश्चेति। तत्र—

पुरोभागे दृश्यानि त्रीणि खातानि—शङ्खखातं, गण्डोत्तरखातं, हनुजातूकखातञ्चेति। तेषु—

---

१ तदेतत्त्रयं चक्रार्द्धाकारं गण्डबहिःस्थम्। (Zygomatic arch). २ Side of the Skull (Norma Lateralis).

## [ ४७श (क) चित्रम्—करोटिपक्षः (वामः)। ]




करोटिपक्षः

( क ) शङ्खखातं[1] नामार्द्धचन्द्राकारं खातं गण्डचक्रादूर्द्धतनम्। तस्य च निर्म्माणमस्थिपञ्चकांशैर्द्रष्टव्यम्। तद्यथा—

गण्डं पुरःकपालञ्च जतूकापक्षतिस्तथा।
शङ्खं पार्श्वकपालञ्च पञ्चकं शङ्खखातकृत्॥

पूर्य्यते च तत् शङ्खच्छदाख्यपेश्या च्छाद्यते च शङ्खावरण्याकलया॥

( ख ) गण्डोत्तरखातं[2] नाम गण्डचक्रादधस्तनं खातं हनुकुन्त-धारणम्। तच्चापूर्य्यते शङ्खच्छदाख्यपेश्या अधोभागेन, पेशीभ्याञ्च हनुकूट-कर्षणीभ्यां। धार्य्यन्ते च तत्र आन्तरहानव्याः[3] सिराधमन्यः, पञ्चमनाड्याश्च हानव्याः शाखाः।

अनयोश्च खातयोरेकत्वेऽपि ऊर्द्ध्वाधरांशभेदात् संज्ञाद्वयम्।

---

१ Temporal Fossa. २ Zygomatic Fossa. ३ Internal Maxillary Vessels.

**(ग) हनुजातूकखातं**[1] नाम ऊर्द्ध्वहनुजतूकयोः सन्धाने स्थितं त्रिकोणप्रायं लघुतरं खातं नेत्रगुहायाः पश्चिमस्थम्। अस्य पूर्व्वसीम्नि ऊर्द्ध्वहनोः पश्चिमार्व्वुदं, पश्चिमसीम्नि तु जतूकास्थ्नश्चरणफलकद्वयम्। केन्द्रच्छेदं तिसृणां परिखाणां क्रमात् हनुजातूका-हनुचरणिका पक्षान्तरालाख्यानाम्[2]। सम्बन्धश्चास्य नेत्र नासा-मुख-मस्तिष्क-गुहाभिर्गण्डोत्तरखातेन च। धार्य्यन्ते चात्र ऊर्द्ध्वहानव्या नाड़ी सग्रन्थिका[3], धमनी चान्तरहानव्या नाम।

पश्चिमभागेतु करोटिपक्षस्य विशेषाद्दर्शनीये कर्णकुहरं, गोस्तनाकारं प्रवर्द्धनकश्च शङ्खास्थ्नः।

## अथ करोटिपुरोभागः—मुखमण्डलम्।

**करोटीपुरोभाग**[4]स्तावत् मुखमण्डलनिर्म्मापको वृत्तप्रायः। (४८श चित्रम्)। तस्य चोर्द्ध्वसीम्नि भ्रूमध्यं भ्रूतोरणिके च, अधःसीम्नि अधोहनुमण्डलम्, पार्श्वसीम्नि चैकैकतो गण्डास्थि, अधोहनुकूटश्चेति—चतुःसीमनिर्द्देशः।

अत्र चैतानि मध्यभागे लक्षणीयानि अधोऽधः—

(१) **कूर्च्चकं भ्रूमध्यं**[5] वा नाम स्थपन्याख्यमर्म्मस्थानं वर्णितपूर्व्वम्। तदुभयतश्च **भ्रूतोरणिके**[6]।

(२) **नासास्थिनी** परस्परसन्धानरेखासहिते। अनयोश्च पुरःकपालसन्धानस्थानं **नासामूलं**[7] नाम। नासास्थ्नोश्च संहितयोर्**नासासेतु**[8]रिति संज्ञा।

(३) **नासापुरोद्वारं**[9] त्रिकोणप्रायम्। तस्य च परिधिः पार्श्वयो र्नासापार्श्विकाभ्यां[10], मध्ये च नासाग्रप्राचीराख्येन तरुणास्थ्ना सन्धायी। अधःसीम्नि चास्य मध्यतो **नासाग्रकण्टकम्**[11]। दन्तमूलविलञ्च तदधस्तादेकैकतः।

(४) **कर्त्तनकं**[12] **दन्ता** अष्टौ,—चत्वारः ऊर्द्ध्वहनुमण्डले, चत्वारश्चाधोहनाविति।

(५) **चिबुकसन्धानिका** रेखा, **चिबुकपिण्डश्च**।

अथापराणि चैतानि एकैकस्मिन् पार्श्वे लक्षणीयानि—

---

१ Spheno-maxillary Fossa. २ Spheno-maxillary, Pterygo-maxillary and Spenoidal Fissures. ३ Superior Maxillary Nerve with Meckel's ganglion. ४ Anterior Region of the Skull (Norma Facialis). ५ Glabella. ६ Superciliary Ridges. ७ Nasion. ८ Bridge of the Nose. ९ Anterior Nares. १० तरुणास्थिभ्यामिति योज्यम्। ११ Subnasal Point. १२ Incisor Teeth.

## [ ४८श चित्रम्—मुखमण्डलस्य दक्षिणार्द्धम् (अधोहनुवर्ज्जम्) ]




**नेत्रगुहाङ्गानां व्याख्या**—१, अश्रुपीठम् । २, झर्झरकांशः । ३, ४, जतूकास्थि, मध्ये चानयोर्द्दृष्टिनाड़ीरन्ध्रं पश्चान्तरालञ्च । ५, पुरःकपालांशः । ६, गण्डास्थ्यंशः । ७, ऊर्द्ध्वहन्वंशः । ८, तालुस्थ्यंशः ।

(१) नेत्रगुहा[1] अक्षिगोलकधरा। छिद्रञ्च तदूर्द्ध्वम् अधिभ्रुवाख्यम्[2]। तदधश्च नेत्राधरीयं[3] नाम वर्णितपूर्व्वम्।

(२) पार्श्वतश्च गण्डास्थ्नि छिद्रं छिद्रद्वयं वा गण्डच्छिद्रं[4] नाम वर्णितपूर्व्वम्, गण्डकूटं[5] हनुगण्डसन्धानरेखा च।

(३) दन्ताश्च द्वादश, षट् ऊर्द्ध्वं षट् चाधः—एको रदनकः[6], पञ्च चर्वणकाश्चेति[7]।

(४) अनुचिबुकविवरं[8], बाह्यतिरश्चीना रेखा, वक्त्रधमनीपरिखा[9] च (४३श चित्रम्)।

पेश्यः पुनरत्र संयुज्यन्ते मुखमण्डलस्य एकैकार्द्धे षोड़श। तद्यथा—भ्रूमध्यपार्श्वतो भ्रूसङ्कोचनी[10] नेत्रनिमीलनी[11] च; नेत्रान्तःकोणे नेत्रकण्डरिका[12], तदधश्च नासौष्ठकर्षणी[13]; नेत्राधरीयविवरोपरिष्टात् ओष्ठसमुत्कर्षणी[14], तदधश्च सृक्कणीसमुन्नमनी[15]; गण्डकूटे सृक्कणीकर्षण्यौ[16] लम्वी गुर्व्वी च; गण्डकूटाधोधारायां हनुकूटे च हनुकूटकर्षणी[17]; दन्तोदूखलमण्डलस्यपूर्व्वार्द्धे मुखमुद्रणी, पश्चार्द्धे च कपोलिका[18]; दन्तमूलविले नासासङ्कोचनी[19] नासानमनी[20] च; चिबुकपिण्डपार्श्वतः चिबुकोत्क्षेपणी[21]; बाह्यतिरश्चीनरेखामभितश्च तिस्रः—अधरावनमनी[22], सृक्कणोनमनी[23], गलपार्श्वच्छदा[24] चेति।

---

१ Orbit. नेत्रगुहाविशेषास्तु अनुपदं पृथग् वर्णनीयाः। २ Supra-orbital Foramen. ३ Infra-orbital Foramen. ४ Malar Foramen. ५ Malar Prominence. ६ Canine tooth. ७ Bicuspid & Molar teeth. ८ Mental Foramen. ९ Groove for Facial Artery. १० Corrugator Supercilii. ११ Orbicularis Palpabrerum. १२ Tendo Oculi. १३ Levator Labii Superioris alæquie nasi. १४ Levator Labii Superioris. १५ Levator Anguli Oris. १६ Zygomaticus major & minor. १७ Masseter. १८ Orbicularis Oris & Buccinator. १९ Compressor Nasi २० Depressor alæ nasi. २१ Levator menti. २२ Depressor Labii Inferioris. २३ Depressor Anguli Oris. २४ Platysma myoides.

# अथ नेत्रगुहे।

**नेत्रगुहे नेत्रकोटरे** वा नाम (४९श चित्रम्) धुस्तूरपुष्पसदृशायतने[2] कोटरे नासामुभयतः स्थिते नेत्रगोलकधरे[3]। तयो रेकैका सप्तास्थिनिर्म्मितप्राचीरा। अस्थीनि चात्र चत्वारि गुहाद्वारपरिधिनिष्पादकानि, त्रीणि च गुहामूलमभितः स्थितानि तद्यथा—

(१) अश्रुपीठम् अश्रुवाहिकाधारणम् अन्तःपरिधिस्थम्।
(२) अग्रकपालस्य नेत्रच्छदिफलकमूर्द्ध्वपरिधिस्थम्।
(३) ऊर्द्ध्वहन्वस्थ्नो नेत्रपीठफलकं नेत्रभूमिनिष्पादकमधःपरिधिस्थम्।
(४) गण्डास्थ्नः अक्षिफलकं बहिःपरिधिस्थम्।
(५) जतूकास्थ्नः पक्षतिद्वयम्, }
(६) तात्वस्थ्नश्चूड़ास्थं प्रवर्द्धनम्, } त्रयं नेत्रगुहामूलमभितः प्रततम्।
(७) झर्झरकस्य नेत्रान्तःपीठञ्चेति }

एष चैषां संग्रहश्लोकः—

अश्रूर्द्ध्वहनुगण्डाग्रकपालैर्द्वारि वेष्टिता।
मूले नेत्रगुहा नद्धा[4] जतूका तालु झर्झरैः॥

तथापि जतूका-झर्झराग्रकपालानामुभयो र्नेत्रगुहयोः प्रवेशात् नेत्रगुहाद्वये एकादशैवास्थीनीति विशेषः।

एकैकस्याश्च नेत्रगुहायाः षड् भागाः। तद्यथा—

(क) **नेत्रगुहाद्वारं**[5] वृत्तप्रायं यथोक्तपरिधिकम्।

(ख) **नेत्रगुहामूलं**[6] धुस्तूरपुष्पवृन्तवत् सङ्कुचितप्रायं यथोक्तेनास्थित्रयेण संवेष्टितम्। अत्र च दृश्यं दृष्टिनाड़ीरन्ध्रं पश्चान्तरालञ्च वर्णितपूर्व्वं नेत्रगुहान्तः-प्रवेशिनीनां दृष्टिनाड़ी-सिरा-धमनीनां प्रवेशाय।

---

१ Orbits. २ सादृश्यञ्च पुरःप्रान्ते सुविस्तृततया पश्चिमप्रान्ते चातिसङ्कुचिततया। ३ सम्बद्धा वेष्टितेति यावत्। ४ तेषां मध्यस्थत्वादिति भावः। ५ Anterior Opening of the Orbit. ६ Posterior Opening of the Orbit.

(ग) **नेत्रगुहाच्छदिः**[१] गुहापटलभूतः अग्रकपालस्य नेत्रच्छदिफलकेन जतूकास्थ्नो लघुपक्षत्या च निर्म्मितः। दृश्यते चात्र बहिःकोणे अश्रुग्रन्थिखातम्, अन्तःकोणे च वक्रोर्द्ध्वदर्शिन्याख्यनेत्रपेश्याः आकर्षभूमिः[२]।

(घ) **नेत्रगुहाभूमिः**[३] प्रधानतः ऊर्द्ध्वहनो र्नेत्रपीठफलकेन, स्तोकमात्रा-भ्याञ्च गण्डतालव्यशाभ्यां निर्म्मिता समतलप्राया।

(ङ) **अन्तःप्राचीरं**[४] स्वनामव्याख्यातम् ऊर्द्ध्वहनोर्नासाकूटपार्श्वेनाश्रु-पीठेन, झर्झरास्थ्नो नेत्रान्तःफलकेन, स्तोकमात्रेण जतूकाशरीरपार्श्वेन च निर्म्मितम्। अत्र च विशेषतो दृश्या अश्रुवाहिका नासाभिमुखी[५]।

(च) **बहिःप्राचीरं**[६] पूर्व्वार्द्धे गण्डास्थ्नोऽक्षिफलकेन, पश्चार्द्धे जतूकास्थ्नो वृहत्पक्षत्या च निर्म्मितम्। दृश्यञ्चात्र शङ्खगण्डिकरन्ध्रमार्गस्थं[७] विवरं विवरद्वयं वा।

**सन्धानाङ्काश्चात्र** तत्तदस्थ्नामालक्ष्या विशेषेण।

**विवराणि** चात्र नव दृश्यानि। तद्यथा—मूले दृष्टिनाड़ीरन्ध्रम्[८], तद्बहिः पक्षान्तरालं[९] (तेन तृतीय-चतुर्थ-षष्ठनाड़ीनां पञ्चमनाड्याः नेत्रग-शाखायाः नेत्रगानाञ्च सिरा-धमनीनां नेत्रगुहाप्रवेशः), हनुजातूकखातञ्च[१०]। तदन्तः झर्झरकविवरद्वयं[११] सूक्ष्मम्। अन्तःकोणे अश्रुवाहिका[१२]। ऊर्द्ध्वपरिधौ अधिभ्रुवम्[१३], अधःपरिधौ च नेत्राधरीयं[१४] विवरम्। बहिःकोणे शङ्खगण्डिकाख्यो[१५] रन्ध्रमार्गश्चेति।

**पेश्यस्तु** नेत्रगुहाप्राचीरेषु संयुज्यन्ते सप्त,—क्रमात् ऊर्द्ध्वदर्शिनी[१६], अधोदर्शिनी[१७], अन्तर्द्दर्शिनी[१८], बहिर्द्दर्शिनी[१९], वक्रोर्द्ध्वदर्शिनी[२०], वक्राधोदर्शिनी[२१]

---

१ Roof of the Orbit. २ सेयं नेत्रपेशी अङ्कुशाकारेण तरुणास्थिमयेनाकर्षेण धृता तदाश्रित्य विवर्त्तते। स चाकर्ष इह संलग्न इति। तदेतत् पेश्यध्याये वर्णयिष्यते। ३ Floor of the Orbit. ४ Inner wall. ५ अतिसुतमश्रुजलमश्रुवाहिकापथेन नासाभ्यन्तरे प्रविशति। ६ Outer wall. ७ Malar Canal. ८ Optic Foramen. ९ Foramen Lacerum Anticus. १० Spheno-maxillary Fissure. ११ Ethmoidal canals. १२ Lachrymal canal. १३ Supra-orbital Foramen. १४ Infraorbital Foramen. १५ Tempero-malar Canal. १६ Superior Rectus. १७ Inferior Rectus. १८ Internal Rectus. १९ External Rectus. २० Superior Oblique. २१ Inferior Oblique.

चेति—षट् नेत्रगोलके सम्बद्धाः, सप्तमी च अश्रुविसर्ज्जनो नाम अश्रुवाहिका पश्चिमत इति ।

सेयं नेत्रगुहा नातिविस्तरं व्याख्याता ।

## अथ नासागुहे ।

**नासागुहे**[२] द्वे घ्राणेन्द्रियाधिष्ठाने श्वासवायुग्रहणद्वारभूते च । तयोर्मध्यतः प्राचीरकं प्रतन्वस्थिमयम् । तयोः प्रधानतो गलविलेन[३] सम्बन्धः । निर्म्माणञ्च तयोश्चतुर्द्दशभिरस्थिभिः,—झर्झरक-जतूकाग्रकपालाख्यैस्त्रिभिः शिरोऽस्थिभिः, अधोहनु गण्डास्थिद्वय-वर्ज्जं सर्व्वैश्च[४] मुखमण्डलास्थिभिरिति ।

एकैकस्याश्च नासागुहायाः षड्भागाः—

**गुहाच्छदिः, गुहाभूमिः, अन्तःप्राचीरम्, बहिःप्राचीरम्, नासापुरोद्वारम्, नासापश्चिमद्वारञ्चेति ।**

तिस्रश्च एकैकस्यां नासागुहायां सुरङ्गाः—**ऊर्द्ध सुरङ्गा, मध्यसुरङ्गा, अधःसुरङ्गा चेति ।** ताः बहिःप्राचीरवर्णनायामन्तर्भूताः । तत्र—

**नासागुहाच्छदि**[५]र्नाम नासागुहापटलम् । तस्य निर्म्माणमग्रतो नासास्थिभ्यां, समूलेन च पुरःकपालस्याग्रकण्टकेन ; मध्ये झर्झरास्थ्नश्चालनीपटलेन, पश्चिमतो जतूकास्थ्नः कायपिण्डेन च । तत्र नासास्थितले नासानाड्योः, चालनीपटलस्थैश्छिद्रैश्च घ्राणनाड़ीप्रतानानां प्रवेशः ।

**नासागुहाभूमि**[६]**: नासाभूमि**र्वा नाम स्वनामव्याख्याता ईषत्कोरोदरा । तस्या निर्म्माणं पूर्व्वार्द्धे ऊर्द्ध्वहन्वोस्तालुफलकाभ्यां, पश्चार्द्धे च तात्वस्थ्नोः ऋस्वपत्रकाभ्याम् । दृश्यानि चात्र—नासाग्रकण्टकम्, अग्रतालुकखातविवराणि, स्वस्तिकसन्धानिका[७] चेति सर्व्वाणि वर्णितपूर्व्वाणि । मध्ये च नासागुहायाः सन्धीयते सीरिकास्थि मध्यप्राचीरभूतम् ।

---

१ Tensor Tarsi. २ Nasal fossa. ३ गलविलं नाम गलविवरं नासाखकुहरपश्चिमम् । ४ एकादशभिरिति फलितार्थः । ५ Roof. ६ Floor. ७ सेयम् ऊर्द्धहनुतालुफलकयो स्तात्वस्थिऋस्वफलकयोश्च परस्परसन्धानरेखा वर्णितपूर्व्वा ।

## [ ४९ श चित्रम्—नासागुहा ( वामा ) ]

( बहि:प्राचीरस्था विशेषा: )



**अन्तःप्राचीरं**[1] तावदुभयोर्नासाभूम्योरेकमेव मध्यप्राचोरापरपर्य्यायम्। तस्य निर्म्माणं तिर्य्यक्संहिताभ्यां झर्झरमध्यफलक-सीरिकास्थिभ्याम्। तेन चेदं मध्यप्राचीरं प्रायेण दक्षिणतो वामतो वाऽनतं[2] दृश्यते करोटौ स्वभावात्। अस्थ्नोश्च तयोः सन्धानमग्रतस्त्रिकोणतरुणास्थ्ना, पश्चिमतश्च जतूकास्थ्नो रसनिकया[3]। दृश्यञ्चास्य नासामध्यप्राचीरस्य तलद्वयं वामदक्षिणभेदात्। तलद्वये च सीरिकानुपूर्व्वगा नासातालुकाख्यनाड़ीद्वयधारिण्यौ परिखे, अनल्पानि च सूक्ष्मच्छिद्राणि नाड़ीधमनीप्रतानधारणाय।

**बहिःप्राचीरं**[4] पुनर्नासागुहाया एकैकस्याः पृथगेव। तस्य निर्म्माणमग्रत ऊर्द्ध्वहनो र्नासाकूटेनाश्रुपीठेन च, मध्ये झर्झरकपार्श्वपिण्डेनोर्द्ध्वहनुपिण्डेन शुक्तिकास्थ्ना च, पश्चिमतस्तास्वस्थ्नो दीर्घपत्रकेण जतूकास्थ्नश्चरणफलकेन चान्तरेण। अत्र तिस्रः सुरङ्गाः—ऊर्द्ध्वमध्याधःसंज्ञाः शुक्तिकापत्रकै र्विभक्ताः, क्रमात्—ऊर्द्ध्वसुरङ्गा, मध्यसुरङ्गा अधःसुरङ्गा चेति। तत्र—

(१) **ऊर्द्ध्वसुरङ्गा**[5] नाम ऊर्द्ध्वतनो[6] नासागुहामार्गो ह्रस्वतमः, नासागुहायाः पश्चार्द्धमात्रे वर्त्तमानो झर्झरास्थ्न ऊर्द्ध्व-मध्यशुक्तिकाभागयोरन्तरालस्थः। त्रीणि चात्र प्रकाशन्ते विवराणि, तद्यथा—पश्चात् तालुजातूकं नाम तदाख्यनाड़ी-धमनीनां प्रवेशाय, अग्रतो झर्झरकोटरद्वारं नाम झर्झरास्थिपश्चिमकोटरानुबन्धि, चूड़ायाञ्च जतूकाद्वारं जतूकाकारपिण्डान्तरीयेण कोटरेण सानुबन्धमिति। पीनस रोगेषु एतयोः कोटरयोरन्तः पूयःप्रवेशेण अस्थ्नां जर्जरीभावो मस्तिष्क विकृतिश्च दृश्यते।

(२) **मध्यसुरङ्गा**[8] नाम मध्याधःशुक्तिकयोरन्तरालस्थो मार्गो मध्यमाकारः। तत्रैकं विवरं झर्झरकोटरमार्गेण ललाटकोटरानुबन्धि। अपरमूर्द्ध्वहनुपिण्डमध्यस्थस्य हनुगर्भकोटरस्य द्वारभूतम् ( दृश्यतां ७८ पृष्ठे हनुगर्भकोटरवर्णनम् )। नासारोगेषु उभयोरपि कोटरयोः पूयसञ्चारः क्वचिद् दृश्यः।

(३) **अधःसुरङ्गा**[9] तावत् अधःशुक्तिकास्थ्नोऽधस्तात् वर्त्तमानो दीर्घतमो मार्गः समग्रस्य नासाबहिःप्राचीरस्यानुवृत्त्या वर्त्तमानः। अस्य पूर्व्वार्द्धे अश्रुवाहिकाया द्वारमतिप्रवृत्तस्याश्रुजलस्य नासागुहाप्रवेशाय।

**नासापुरोद्वारं**[10] नाम नासागुहायाः पुरोभागस्थं द्वारं बाह्याभिमुखं तच्च समांसशरीरे तरुणास्थिसंयोगात् सङ्कुचिततरं ताम्बूलपत्राकारम्।

---

१ Inner wall. २ सेयम् जतूकास्थ्नः पुरस्तलस्था समुन्नता रेखा वर्णितपूर्व्वा। ३ वक्रलम्बितमिव।
४ Outer wall. ५ Superior Meatus. ६ ऊर्द्ध्वभागे नासागुहायाः सङ्कुचितप्रायत्वात्। ७ नासागुहायाः शिखरोपान्ते। ८ Middle Meatus. ९ Inferior Meatus. १० Anterior Nares.

द्विभागविभक्तश्च दृश्यते नासाग्रत्रिकोणतरुणास्थिसङ्घितेन नासामध्यप्राचीरेण वर्णितपूर्व्वेण । अस्योर्द्ध्वसीम्नि नासास्थिनी, पार्श्वयोरधःसीम्नि चोर्द्ध्वहन्वस्थिनी परस्परसंहिते ।

**नासापश्चिमद्वारं**[1] तावत् वृत्तप्रायं नासागुहायाः पश्चिमं द्वारं गलबिलाभिमुखम् । तस्य पश्चिमतो गलविलच्छदिभूतं पश्चिमकपालस्य मूलपिण्डम् । ऊर्द्ध्वसीम्नि जतूकाशरीरम् । अधःसीम्नि ताल्वस्थ्नो क्षुद्रपत्रकद्वयम् । पार्श्वयोस्तु जतूकाचरणद्वयमान्तराख्यम् । द्विभागविभक्तश्च तत् सीरिकास्थ्ना यथोक्तसन्धानेन ।

सेयं नासागुहा नातिविस्तरं व्याख्याता । तद्विस्तरस्तु घ्राणेन्द्रियवर्णनावसरे वक्तव्यः ।

## अथ समग्रकरोटिदृश्याः त्वाचभागाः ।

**त्वाचभागा**[2]स्तावत् त्वङ्मात्रावरणा अस्थिभागाः करोटिस्था विशेषतो लक्षणीयाः । तैर्हि परिज्ञातैः साधु समुन्नीयन्ते[3] शिरोगुहान्तरीया मस्तिष्कादिविशेषा यथास्थानं वक्ष्यमाणा इति ।

ते च सप्तविंशतिसंख्या वर्णितपूर्व्वाः । तद्यथा—द्वे भ्रूतोरणिके, द्वे गण्डचक्रे, द्वे गण्डकूटे, द्वे गोस्तनप्रवर्द्धने, एकं पश्चिमार्व्वुदम्, द्वे उत्तरतोरणिके (तदुभयतः पश्चिमकपालस्थे), द्वौ पार्श्वकुम्भौ, द्वे शङ्खतोरणिके, द्वौ पुरकुम्भौ, द्वे नासास्थिनी, द्वौ नेत्रगुहापरिधी, द्वौ हनुकोणौ, एका हन्वधस्तनी धारा, एकं चिवुकपिण्डश्चेति ।

तदेतदस्थिखण्डं समाप्तम् । शिक्षणीयश्चेदमतियत्नादीक्षणोन्मेषाय ।
कीकसे[4] यदि कार्कश्यं तथाप्यादीयतामिदम् ।
ज्ञानगङ्गाम्बु सङ्गत्या दिव्या तनुरतो यतः[5] ॥

### इति चतुर्थोऽध्यायः ।

### इत्यस्थिखण्डम् ।

---

१ Posterior Nares. २ एतदर्थे त्वक्शब्दात् शैषिकोऽण्प्रत्ययः। (Sub cutaneus parts.) ३ रेखापातादिभिः सम्यग् ज्ञायन्ते वक्ष्यमाणदिशा। ४ अस्मिन् अस्थिखण्डे। ५ यतो हेतोः अस्मिन् ज्ञानरूपगङ्गाजलसम्पर्कात् दिव्यतनुलाभो (तनुविषयकपूर्णज्ञानलाभ इति यावत्) भविता। अत्र श्लिष्टोऽर्थोऽप्यनुसन्धेयः।

# अथ सन्धिस्नायुखण्डम् ।

## प्रथमोऽध्यायः ।

अथातः सन्धिस्नायुसामान्य[1]विज्ञानीयमध्यायं व्याख्यास्यामः ।

इह खलु सन्धय इत्यस्थ्नामेवं[2] सन्धयो वर्णनीयाः, इतरसन्धीनामसङ्ख्येयत्वाद-प्रयोजनत्वाच्च । आहुश्च—

"अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः ।
पेशी-स्नायु-सिराणान्तु सन्धिसङ्ख्या न विद्यते ॥" इति—
( सु० शा० ५ अ० ) ।

ते च सन्धयो द्विविधाः—"चेष्टावन्तः स्थिराश्च ।
"शाखासु हन्वोः कट्याञ्च चेष्टावन्तस्तु सन्धयः ।
शेषास्तु सन्धयः सर्व्वे विज्ञेया हि स्थिरा बुधैः ॥" इति—

अन्ये तु मन्यन्ते—चेष्टावन्तः सन्धयो द्विविधाः, बहुचेष्टाः अल्पचेष्टाश्चेति कृत्वा, त्रिविधाः सन्धयः—बहुचेष्टाः[3], अल्पचेष्टाः[4], अचेष्टाश्चेति[5] । तत्र शाखासु अधोहन्वोः कट्योश्च बहुचेष्टाः, पृष्ठवंशादिष्वल्पचेष्टाः, अन्यत्र पुनरचेष्टाः ।

अथात्र चेष्टावत्सु सन्धिषु अस्थिद्वयम् अस्थित्रयं वा सम्बध्यते सान्द्रमसृण-शणगुच्छसमाकाराभिः प्रतानवतीभिः स्नायुरज्जुभिः स्नायुकोषैश्च[6] । सन्धेयभागाश्च तत्रास्थ्नां तरुणास्थिसमावृताः सुसंश्लिष्टाश्च श्लेष्मधरकला[7]पुटव्यवधानेन सम्यग्-वर्त्तनाय । तदाहुः—

स्नेहाभ्यक्ते यथा ह्यक्षे चक्रं साधु प्रवर्त्तते ।
सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा[8] तथा ॥"
( सु० शा० ५ अ० )

---

१ सामान्यतः सन्धिस्नायुवर्णनार्थोऽयमध्याय इत्यभिसन्धिः । २ इहापि तरुणास्थिवर्जमिति बोध्यम् । सन्धयः = Joints or Articulations. ३ Diarthroses or Movable Joints. ४ Amphiarthroses or Mixed Articulations. ५ Synarthroses or Immovable Joints. ६ काश्चित् स्नायवो रज्ज्वाकाराः, काश्चिच्च कोषाकारा इति द्विधा निर्देशः । स्नायुरज्जवः = Ligaments. स्नायुकोषाः = Articular Capsules. ७ Synovial Membrane. ८ श्लेष्मा चेह श्लेषको नाम — Synovia.

अचेष्टाः पुनः सन्धयः प्रतनुस्नायुजालसंहताः दन्तुरधारादिभिर्निरन्तर[1]-संश्लिष्टाश्च, तेषु हि प्रयोजनाभावात् श्लेषधरकलाया अभावः ।

आकृतितः पुनरष्टविधाः सन्धयः प्राचाम्—"कोरोदूखलसामुद्गप्रतरतुन्न-सेवनीवायसतुण्डमण्डलशङ्खावर्त्ताः । तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः । कक्षावङ्क्षणदशनेषूदूखलाः । अंसकूट[2]गुदभगनितम्बेषु सामुद्गाः । ग्रीवापृष्ठवंशयोः प्रतराः । शिरःकटिकपालेषु तुन्नसेवनी । हन्वोरुभयतस्तु वायसतुण्डः । कण्ठनाड्यादि[3]षु मण्डलाः[4] । श्रोत्रशृङ्गाटकेषु शङ्खावर्त्ताः[5] ।"

( सु० शा० ५ अ० )

विस्तरोऽत ऊर्द्धम् ।

तत्र **कोरा** नाम सन्धयो बहुचेष्टाः, उत्तानकोरगर्भेष्वस्थिप्रान्तेषु उत्क्षेपवतामस्थिभागानां सन्धानरूपाः । ते चतुर्विधाः—खल्लकोरः, परस्परकोरः, चक्रकोरः, सन्दंशकोरश्चेति । तेषु—

( १ ) <u>खल्लकोर[6]ः</u> मणिबन्धे गुल्फसन्धौ च स्वनामख्यातः ।

( २ ) <u>परस्परकोर[7]ः</u> पर्य्याणकाकारस्थालकयोः परस्परसन्धानरूपः, यथा—अङ्गुष्ठमूले[8] ।

( ३ ) <u>चक्रकोर[9]ः</u> मध्यकीलमाश्रित्य चक्रस्येव विवर्त्तनप्रदः सन्धिः, यथा—चूड़ावलयासहितस्य शिरसो दन्तचूड़ाख्यकशेरुकयो[10]ः ।

( ४ ) <u>सन्दंशकोर[11]ः</u> सन्दंशाकारस्याऽस्थिभागस्य सन्धाने यथा—कूर्परसन्धौ[12] ।

---

१ निरन्तरमव्यवधानेन । २ अंसपीठेति क्वचित् पाठ प्रामादिक एव, कक्षायां पृथगेव कोरसन्धेरभिधानात् अंसपीठस्य च तत्रैव सम्भवात् । अंसकूटेति पाठे तु अंसकूटाचकयोः सन्धिरुच्यते, तेन चांसचक्रनिर्म्माणात् सामुद्गसन्धिता युज्यत एव । ३ कण्ठनाड्यां श्वासपथे । इहापि केषुचित् मुद्रितपुस्तकेषु कण्ठहृदयनेत्रेत्यादि-पाठः प्रामादिक एव प्रतिभाति, हृदयादौ अस्थ्नामदर्शनात् । ४ मण्डलाकाराणां तरुणास्थ्नामुपर्य्युपरि निवेशादियं संज्ञा । इश्यतां फुस्फुसवर्णने श्वासपथः । ५ कर्णशष्कुलीषु तरुणास्थ्नां शङ्खावर्त्ताकारतो निवेशादियं संज्ञा । ६ Condyloid Articulations. ७ Reciprocal Reception (Saddle-Joints.) ८ पर्य्याणकाख्यस्य कूर्चास्थ्नः अङ्गुष्ठमूलशलाकया सन्धाने इति भावः । ९ Trachoides ( Pivot Joint. ) १० तत्र हि दन्त-चूड़ाख्यप्रवर्द्धनमाश्रित्य विवर्त्तते चूड़ावलया । ११ Ginglymus. १२ अन्तःप्रकोष्ठास्थ्नः प्रगण्डास्थ्ना सन्धाने ।

**उदूखला**[1]: नाम सन्धयोऽपि बहुचेष्टाः उदूखलवद्गभीरप्रायेष्वस्थिभागेषु इतरास्थिमुण्डसन्धानरूपाः। तेषु हि खोदूखलान्याश्रित्य अभितो[2] विवर्त्तन्ते तानि तान्यस्थीनि, यथा—कक्षावङ्क्षणसन्धिषु।

**दशनोदूखला**[3]**स्तु** स्थिराः सन्धयः पृथगेव मन्तव्याः।

सामुद्गाः नाम समुद्ग[4]निर्म्मापका इव सन्धयः अल्पचेष्टाः। ते च श्रोणिचक्रांसचक्रादिषु दृश्याः।

**प्रतरा**[5] नाम प्रतरणशीलैरिव ईषच्चलैः समतलांशाभ्यां परस्परसंहितैरस्थिखण्डैर्निर्म्मिताः सन्धयः। ते त्रिविधाः सन्धानप्रकारवैशेष्यात्—चलप्रतरो युक्तप्रतरो दृढ़प्रतरश्चेति। तत्र—श्लेष्मधरकलाव्यवधानेन चलत्वबाहुल्ये सति चलप्रतराख्यः सन्धिः, यथा—करचरणकूर्च्चास्थ्नां परस्परसंयोगे। अन्तरालस्थया स्नायुरज्ज्वा दृढ़कलया वा संयोगे युक्तप्रतरः, यथा प्रकोष्ठास्थ्नोर्जङ्घास्थ्नोश्च परस्परसन्धाने। अन्तरालस्थेन तरुणास्थिचक्रेण सजातीयानां दृढ़सन्धाने दृढ़प्रतरः, यथा—पृष्ठवंशे कशेरुकाणाम्।

**तुन्नसेवन्यो**[6] नाम परस्परापीड़नैर्दन्तुरधारादिभिर्निर्म्मिताः कपालान्तरालाः सन्धयः। ते शिरःकपालेषु दृश्याः, कटिकपालेषु च प्राग् यौवनात्। ताश्च द्विविधाः—सीमन्तसेवनी ग्रस्तसेवनी चेति। तत्र शिरःकपालेषु सीमन्तसेवन्यः सीमन्ता वा। सोरिकास्थ्नो जतूकास्थ्नः सन्धाने तु ग्रस्तसेवनी।

वायसतुण्डाख्यस्तु सन्धिः[7] अधोहनुमुण्डयोः शङ्खास्थिगताभ्यां हनुसन्धिस्थालकाभ्यां सन्धानान्मुखव्यादानादिसम्पादकः स तु कोरसन्धेरेव खल्लकोराख्यो भेदो युग्मरूपः, तस्य कोरग्रहणेनैव ग्रहणमिति सूक्ष्मदृशः।

मण्डलशङ्खावर्त्ताः पुनः क्रमात् श्वासपथकर्णशष्कुलीगताः तरुणास्थिसन्धयः, तेषां नेह ग्रहणम्।

एते च सन्धिसंग्रहस्मारकाः श्लोकाः—

> अचेष्टास्तुन्नसेवन्यः सीमन्त-ग्रस्तभेदतः।
> शिरोऽस्थिषु समादिष्टा दशनोदूखलास्तथा॥
> अल्पचेष्टास्तु सामुद्गाः श्रोणिचक्रांसचक्रयोः।
> प्रतरास्त्रिविधाश्चैव पृष्ठवंशादिषु स्थिताः॥

---

१ Enarthosis (Ball-and Socket Joints). २ ऊर्ध्वमधःपार्श्वयोश्चेति भावः। ३ Gomphosis.
४ समुद्गाः सम्पुटाः। ५ Arthrodia. ६ Sutures. ७ Schindylosis.

अथात्र बहुचेष्टाः स्युः कोराश्चोदूखलास्तथा ।
आद्याश्चतुर्धा गुल्फादिष्वन्ये कच्चादिगोचराः ॥
प्राचां वायसतुण्डो यः स युग्मः कोर एव हि ।
शङ्खावर्त्ता मण्डलाश्च तरुणास्थिगताः स्मृताः ॥

अथात्र चेष्टावत्सु सन्धिषु स्नायुसन्ततिनिबद्धेषु चत्वारो विशेषाः पृथग्-द्रष्टव्याः—अस्थ्नां सन्धेयांशाः, सन्ध्यन्तरीयतरुणास्थीनि, स्नायवः, श्लेष्मधरा कला चेति। तत्र—

(१) अस्थ्नां सन्धेयांशाः दृढ़चिक्कणास्थिमयाः। ते आच्छाद्यन्ते तरुणास्थि-पत्रकैः सुमसृणैः सन्धानकाले।

(२) तरुणास्थीनि तावत् द्विविधानि सन्ध्यन्तःस्थितानि--सन्धिवेष्टनानि, सन्ध्यन्तरालानि चेति। तत्र सन्धिवेष्टनानि सन्धेयानामस्थ्यंशानां छादकानि, इतराणि तेषामन्तरालेषु स्थितानि चक्रत्रिकोणाद्याकाराणि। तत्र चक्राकाराणि कशेरुकान्तरालेषु, त्रिकोणाकाराणि मणिबन्धादौ। तेषु च कानिचित् स्थिति-स्थापकानि स्नायुसूत्रभूयिष्ठानि च।

(३) स्नायवस्तावत् सन्धिबन्धनकारिण्यः शणसूत्राभदृढ़तन्तुनिर्म्मिताः द्विविधाः—रज्जुरूपाः, कोषरूपाः, कलारूपाश्चेति। तत्र रज्जुरूपाः[1] सन्धिमभितः पृथगवस्थिताः ; कोषरूपाः[2] कोषवत् सन्धिवेष्टनकारिण्यः—ता एता द्विविधा अपि जानुवङ्क्षणादिसन्धिषु दृश्याः। कलारूपास्तु[3] स्नायवः सुदृढ़कलामय्यो वर्णितपूर्व्वाः जङ्घान्तरालाद्या अस्थिसंयोजन्यः।

प्राचस्त्वाचक्षते—

"स्नायूश्चतुर्व्विधा विद्यात्तास्तु सर्व्वा निबोध मे।
प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा ॥
प्रतानवत्यः शाखासु सर्व्वसन्धिषु चाप्यथ।
वृत्तास्तु कण्डराः सर्व्वाः विज्ञेयाः कुशलैरिह ॥
आमपक्वाशयान्तेषु वस्तौ च शुषिरा[4]: खलु।
पार्श्वोरसि तथा पृष्ठे पृथुला[5]श्च शिरस्यथ[6] ॥" (सु० शा० ५ अ०)

१ Ligamentous bands. २ Capsular ligaments. ३ Inter-osseus membranes. ४ आमाशयादिप्रान्तेषु स्नायुसूत्रमयानामङ्गुरीयकसदृशभागानां दर्शनादिति भावः। ५ पृथुलाः प्रच्छदवदायताः, ताश्च प्रच्छदाकारपेशीनां प्रान्तेषु दृश्याः ( = Apponeurosis ). ६ दृश्यतां ८म पृष्ठे "नौर्ध्यथे"त्यादि पाठोऽपि।

तत्र प्रतानवत्यः इह गृह्यन्ते सन्ध्यध्याये। तदन्यास्तु पेशीवर्णने आशय-वर्णनावसरे च वर्णनीयाः।

वर्णतश्च द्विविधाः स्नायवः—शुभ्राः पीताश्च। तत्र शुभ्राः सर्वत्र दृश्यन्ते अन्यत्र ग्रीवाधरायाः स्नायुरज्ज्वाः, कशेरुचक्रान्तरालाभ्यश्च स्नायुभ्यः। कशेरु-चक्रान्तराला हि स्नायवः पीताभाः स्थितिस्थापकगुणबहुलाश्च[१]।

श्लेष्मधराः कलास्तु[२] चेष्टावतां सन्धीनामन्तरावरण्यः कोषरूपाः सम-न्तात् सन्धेयांशेषु संसक्ताः। तदन्तश्च स्रवति श्लेषकः श्लेष्मा[३] नियतं, येन न क्षीयन्ते सन्धेयभागाः, सम्यक् प्रवर्त्तन्ते च सन्धिमाश्रिता विविधाश्चेष्टाः। आहुश्च—

"स्नेहाभ्यक्ते यथा त्वक्षे चक्रं साधु प्रवर्त्तते।
सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा॥" (सु० शा० ४ अ०)

एताश्च त्रिविधाः सन्ध्यन्तरीयाः, कण्डरानुगास्त्वाचाश्च। तत्र सन्ध्यन्तरीयाः सन्ध्यन्तःस्थितेष्वस्थिभागेषु संसक्ताः स्नायुकोषसमावृताः। कण्डरानुगाः[४] गता-गतशीलानां कण्डराणां वेष्टनभूताः। त्वाचाः[५] पुनः त्वङ्मात्रावरणानामस्थि-भागानामुपरिस्थाः त्वगस्थ्नोरन्तरालस्थाः। तास्तु सन्ध्यन्तरीया एवेह सन्ध्यध्याये-ऽधिकृताः।

अचेष्टेषु पुनः सन्धिषु प्रयोजनाभावात् श्लेष्मधरकलाया अभाव इत्युक्त-पूर्व्वम्।

तदेतत् सन्धिसामान्यविज्ञानं व्याख्यातम्। विशेषोऽत ऊर्द्ध्वम्।

# अथ द्वितीयोऽध्यायः।

अथातः सन्धिविशेषविज्ञानीयमध्यायं व्याख्यास्यामः।

इह खलु सामान्यतो विज्ञातेष्वपि सन्धिषु विशेषाः अवश्यं ज्ञातव्याः भवन्ति, सन्धीनां स्थानसंस्थानचेष्टादिविज्ञानार्थं सन्धिमुक्तादि[६]प्रतीकारार्थञ्च। तानेवेदानीं विशेषान् प्रविभज्य समासतो वक्ष्यामः।

वर्णनासौकर्य्याय चात्र शिरःपूर्व्वं वर्ण्यन्ते सन्धयः। शिरःसन्धिषु च अधा-हनुसन्धानं शिरोग्रीवसन्धानञ्चेति द्वावेव चेष्टावन्तौ सन्धी व्याख्येयौ, इतरे

१ Yellow Elastic fibrous tissue. २ Synovial membrane. ३ Synovia, ४ Tendon sheaths. ५ Bursae. ६ सन्धिमुक्तं सन्धिच्युतिः (Dislocation.)

तु शिरःसन्धयः सीमन्ताख्याः समग्रकरोटिवर्णने वर्णितपूर्वा इति नेह पुनरुच्यन्ते।

शिरोऽनन्तरश्चात्र व्याकरणीयाः पृष्ठवंशोरःकटिशाखागताः सन्धयः—इति क्रमोद्देशः।

## अथ शिरः-सन्धिषु

### अधोहनुसन्धानम्।

अधोहनुस्तावत् सन्धीयते शङ्खास्थिगतयोः स्थालकयोः, स्वमुण्डाभ्याम्। सन्धिश्चायं युग्मकोराख्यो[१] बहुचेष्टः प्राचां वायसतुण्डाख्यः। आश्रित्य चामुमधोहतोः सम्पद्यते ऊर्द्ध्वाधश्चलनं भूयसा, स्तोकेन च पुरःपश्चिमतः पार्श्वयोश्च चलनम्। पुरश्च एकैकस्य हनुमुण्डस्य शङ्खास्थि गण्डप्रवर्द्धनमूलस्थं सन्ध्यर्व्वुदम्, पश्चात् कर्णकुहरस्य पूर्व्वपरिधिः, उपरिष्टाच्च शङ्खालिकाख्या धारा, संयस्यति च हनुमुण्डमेकैकतः स्वकीये स्थालके तैरेव।

[ ५०श चित्रम्—अधोहनुसन्धानम्। ]




[ दृश्यञ्चेह वामार्द्धस्य अभ्यन्तरतलमेव ]

---

१ Double Condyloid,

Digitized by Arya Samaj Foundation Chennai and eGangotri



एकीकृतश्च हनुमुण्डसन्धेर्लक्षणीया इमे विशेषाः—

(१) हनुमुण्डवेष्टनः स्नायुकोषः[१]। तदन्तश्च तरुणास्थिचक्रं स्थालकहनुमुण्डयोरन्तरालस्थम्, तदुभयतश्च श्लेषधरकलापुटकद्वयम्। सन्धेयभागाश्च तरुणास्थिसमावृताः।

(२) हनुमुण्डबाह्या स्नायुः[२], शङ्खास्थ्नः सन्ध्यर्बुदात् हनुमुण्डमूलावधि तिर्य्यक्सम्बद्धा।

(३) हन्वन्तःपार्श्वगा स्नायुः[३], जतूकाद्दृढत्प्रचतिः कोणतः हनुकूटान्तरतले दन्तमूलविवरोपकण्ठं सङ्गता तिरश्चीना।

(४) शिफाहनुकोणिका स्नायुः[४], शङ्खास्थ्नः शिफाप्रवर्द्धनात् हनुकोणं सङ्गता। ता एताः पेशीचयसन्विता अधोहनुसन्धेः सन्धारणे एकीकृतः।

## अथ शिरोग्रीव-सन्धिः।

शिरोग्रीव-सन्धिर्नाम शिरसः सन्धिः पृष्ठवंशेन। तत्र च पश्चिमकपालं सन्धीयते चूड़ावलयया, सा च पश्चिमकपालश्च दन्तचूड़येति त्रिधा व्याख्येयोऽयं सन्धिः। तत्र—

(क) पश्चिमकपाल चूड़ावलययोः सन्धिः[५] पश्चिमकपालमूलकोट्योः सन्धाने कोराख्यः, अवशिष्टांशे तु प्रतराख्यः। स्नायवश्चात्र षट् कपालमूलचूड़िकाख्याः। तद्यथा—

कपालमूलचूड़िका अग्रिमा[६]। सेयं पश्चिमकपालास्थ्नो मूलभागस्य महाविवरपूर्व्वपरिधिभूतस्य चूड़ावलयापूर्व्वार्द्धेन संयोजनी।

कपालमूलचूड़िका पश्चिमा[८]। सेयं पश्चिमकपालांशस्य महाविवरपश्चिमपरिधिभूतस्य चूड़ावलयापरार्द्धेन संयोजनी।

ताश्चोभयतो भित्त्वा सनाड्योर्मस्तिष्कमातृकाख्ययोर्धमन्योर्महाविवरे प्रवेशः।

कपालमूलचूड़िके पार्श्वगे[९]। तयोरेकैका पश्चिमकपालस्य मन्याप्रवर्द्धनं योजयति चूड़ावलयाया बाहुप्रवर्द्धनेनैकैकतः।

कपालमूलचूड़िकौ स्नायुकोषौ[१०]। तौ च धारयतः पश्चिमकपालमूलकोटी तत्स्थालकयोश्चूड़ावलयास्थितयाः परितः, सम्वेष्ट्य। तदन्तश्च द्वश्चेते श्लेषधरौ कलापुटकौ।

१ Capsular Ligament of the Temporo-mandibular Articulations. २ External Lateral (do). ३ Internal Lateral (do). ४ Stylo-mandibular Lig. ५ Cranio-vertebral Articulations. ६ Occipito-atlantal Articulation. ७ Anterior Occipito-atlantal Lig. ८ Posterior (do). ९ Lateral (do). १० Capsular (do).

## [ ५१ चित्रम्—शिरोग्रीवसन्धिः ( पुरस्तलम् ) ]



## [ ५२ चित्रम्—शिरोग्रीवसन्धिः ( पृष्ठतलम् ) ]

( तच्चेह पश्चिमकपालोत्तरार्द्धस्य ग्रीवाकशेरुचक्राणाञ्चापसारणेन दर्शितम् )




[ † एतच्चिह्नं स्नायुबोधकम् ]

(ख) चूड़ावलया दन्तचूड़योः सन्धिस्तु[1] पुरोभागे चक्रकोराख्यः; दन्तचूड़ाया हि दन्तप्रवर्द्धनं मध्यकीलभूतमाश्रित्य विवर्त्तते चूड़ावलया शिरःसहितेति ; अवशिष्टांशे तु प्रतरसंज्ञः । स्नायवश्चात्र पञ्च । तद्यथा—

वलयदन्तिका पुरोगा,[2]—कशेरुपिण्डयोः पुरःसन्धानकरी ।

वलयदन्तिका पश्चिमा,[3]—कशेरुचक्रयोः पश्चिमतः सन्धानकरी ।

वलयदन्तिकौ स्नायुकोषौ,[4]—सन्धिप्रवर्द्धनकयोः सन्धिप्रवर्द्धनकाभ्यां सन्धानकरौ, अभ्यन्तरतः श्लेष्मधरकलापुटकसहितौ ।

स्वस्तिकरज्जुकाख्या[5] स्नायुः उभयतः चूड़ावलयान्तःकलायकयोः सम्बद्धा दन्तप्रवर्द्धनधारणी, ऊर्द्धाधःसंसक्ता च क्रमात् पश्चात्कपालमूलेन दन्तचूड़ापिण्डेन च । सेयं दन्तचूड़ाया दन्तप्रवर्द्धनस्य संयमनी[6] पुरस्तात् । श्लेष्मधरी चात्र कलापुटकौ दन्तप्रवर्द्धनस्य पुरःपश्चिमस्थौ ।

---

१ Atlanto axial Articulation. २ Anterior Atlanto-axial Lig. ३ Posterior (do). ४ Capsular (do). ५ Transverse Lig. ६ संयमनञ्च यथास्थानधारणरूपम् । यदि हि दन्तप्रवर्द्धनं स्थानच्युतं स्यात् तदा सुषुम्नाशीर्षकसम्पीड़नात् सद्य एव मृत्युरिरि निश्चयो विशेषविदाम् ।

(ग) **पश्चिमकपाल-दन्तचूड़योः सन्धौ**[1] तु परस्परस्पर्शाभावेऽपि सम्बन्धः स्नायवस्तत्रो द्रष्टव्याः सुषुम्नाविवरान्तर्निगूढ़ाः । तद्यथा—

कपालदन्तचूड़िका[3]—पश्चिमकपालमूलस्य दन्तचूड़ापिण्डेन संयोजनी । सेयं दन्तप्रवर्द्धनस्य मध्यरज्जुकासंयतस्य च्छादनी पश्चिमतः, सुषुम्नाकाण्डस्य च पुरोगता तद्विवरान्तः ।

दन्तशिखरिका[4]—दन्तचूड़ाया दन्तप्रवर्द्धनस्य शिखरसम्बद्धा ऊर्द्ध्वं पश्चिमकपालमूले संलग्ना ।

दन्तपच्छिके मध्यरज्जुके[4] वा नाम द्वे दन्तप्रवर्द्धनमुभयतः पक्षवत् सम्बद्धे तत्संयमनार्थं पश्चिमकपालमूलकोण्योर्मूलतश्च संसक्ते—इति ।

ता एताः शिरोग्रीवसन्धायिन्यः स्नायवः । अपरा चास्ति **ग्रीवाधराख्या**[5] महती स्नायुरज्जुः पश्चिमकपालस्य पश्चिमार्बुदतः पश्चिमालिकातश्च सप्तम्याः ग्रीवाकशेरुकायाः पृष्ठकण्टकान्तं संलग्ना । सा च स्थितिस्थापकगुणा धारयति प्रयत्नमन्तरेणैव ग्रीवामृजुभावेन ।

## अथ पृष्ठवंशसन्धयः[6] ।

पृष्ठवंशः खलु कशेरुकाभिरुपर्य्युपरिसंहिताभिर्निर्म्मीयते । सन्धिश्च तासां परस्परं पञ्चस्ववयवेषु सजातीयेषु—

(१) कशेरुपिण्डेषु
(२) कशेरुचक्रेषु
(३) सन्धिप्रवर्द्धनेषु
(४) पृष्ठकण्टकेषु
(५) बाहुप्रवर्द्धनेषु चेति ।

तत्र कशेरुपिण्डानां परस्परसन्धयः अचेष्टप्रायाः । कशेरुचक्रादीनां परस्परसन्धयस्तु युक्तप्रतराख्या अल्पचेष्टाः, तेष्वपि चेष्टाधिक्यं ग्रीवा-कटि-कशेरुकासन्धिषु । चेष्टाश्च पृष्ठवंशे अन्तरायमनं[7] बहिरायमनं[8] पार्श्वविवर्त्तनं[9] चेति—त्रिविधा एव प्राधान्येन[10] द्रष्टव्याः । तत्र—

---

१ Occipito-axial Articulation. २ Appartus Ligamentous Colli. ३ Suspensory Ligament. ४ Check Ligaments. ५ Ligamentum Nuchæ. ६ Vertebral Articulations. ७ अन्तरायमनं नाम पुरस्तादवनमनम् । ८ बहिरायमनं पृष्ठतोऽवनमनम् । अपतानकरोगोक्तयोरन्तरायाम-बहिरायामसंज्ञयोर्दर्शनात् पदद्वयस्येदृशार्थे प्रयोगः । ९ वामतो दक्षिणतो वा विवर्त्तनमित्यर्थः । १० अपरासां क्लिष्टचेष्टानां विविधेष्वेवान्तर्भावात् ।

(१) कशेरुपिण्डानां परस्परसन्धानकारिण्यः स्नायवस्त्रिधा विभज्यन्ते—

(क) कशेरुपुरस्था साधारणी[1]। सेयं सर्व्वासां कशेरुकाणां पुरोवर्त्तिनी दृढ़-स्थूलदीर्घपट्टिकाकारा समग्रपृष्ठवंशधारिणी।

(ख) कशेरुपश्चिमा साधारणी[2], सेयं सर्व्वासां कशेरुकाणां पृष्ठवर्त्तिनी पूर्व्ववदेव। दृश्यते चासौ कशेरुचक्राणामपसारणेन सुषुम्नाविवरस्यान्तः पुरःसीमभूता।

(ग) कशेरुपिण्डान्तरालाश्च[3], ताः कशेरुपिण्डानां संयोजन्यः, मध्यतः कोमलस्थितिस्थापकैस्तरुणास्थिप्रायैश्चक्रकैरुपलक्षिताश्च।

(२) कशेरुचक्राणां परस्परसन्धानकारिण्यस्तु स्नायवः स्थितिस्थापकगुणाः पीताभाश्च। ताः कशेरुचक्रान्तरालाः[4] नाम।

(३) सन्धिप्रवर्द्धनानां परस्परसन्धानानि तु कोरप्रायाणि स्नायुकोषान्तःस्थानि[5]। तत्र एकैकस्याः कशेरुकायाश्चत्वारि सन्धिप्रवर्द्धनानि—द्वे ऊर्द्ध्वं द्वे चाधः। तत्रोर्द्ध्व-गयोरुपरिस्थकशेरुकयोरधोगसन्धिप्रवर्द्धनाभ्याम्, अधोगयोस्त्वधःस्थकशेरुकायाः ऊर्द्ध्वगसन्धिप्रवर्द्धनाभ्यां सन्धिः स्नायुमयकोषैः। प्रतिस्नायुकोषञ्च एकैकं श्लेष-धरकलापुटकम्।

(४) पृष्ठकण्टकसन्धायिन्यस्तु स्नायवो द्विविधाः—पृष्ठकण्टकधरा साधारणी कण्टकान्तरालाश्चेति। तत्र—

(क) पृष्ठकण्टकधरा साधारणी[6] दृढ़रज्जुप्राया सर्व्वासां कशेरुकाणां पृष्ठ-कण्टकसन्धायिनी, पश्चिमकपालपृष्ठस्थादर्बुदात् त्रिकास्थिपृष्ठकण्टकान्तं सम्बद्धा। तस्याश्चोर्द्ध्वभागस्य ग्रीवाधरा स्नायुरज्जुरिति संज्ञा उक्तपूर्व्वा।

(ख) कण्टकान्तरालास्तु[7] स्नायवः पृष्ठकण्टकानामन्तरालापूरण्यः प्रतनु-कलानिर्म्मिताः पृष्ठकटिकशेरुकास्वेव विशेषतो दृश्याः।

(५) बाहुप्रवर्द्धनानां परस्परसन्धायिन्यः पुनः स्नायवो बाहुप्रवर्द्धनान्तरालाः[8] नाम। ता ग्रीवाकटिकशेरुकासु प्रतनुकलामय्यः, पृष्ठकशेरुकासु तु रज्जुप्रायाः।

---

१ Anterior Common Ligament. २ Posterior Common Lig. ३ Inter-vertebral Ligaments & Discs. ४ Ligamenta sub-flava. ५ Articular Capsules. ६ Supraspinous Ligaments. ७ Inter-spinous Ligaments. ८ Inter-transverse Ligaments.

# अथ पर्शुकापृष्ठसन्धयः ।

पर्शुकापृष्ठसन्धयो[1] नाम पर्शुकानां सन्धयः पृष्ठकशेरुकाभिः ( ५१ चित्रम् )। ते द्विविधाः—पर्शुकामुण्डानां कशेरुपिण्डैः सन्धयः, पर्शुकार्बुदानां बाहुप्रवर्द्धनकैः सन्धयश्चेति। तत्र—

(१) पर्शुकामुण्डानां कशेरुपिण्डैः सन्धयश्चलप्रतराख्याः। तत्र प्रथमदशमैकादशद्वादशीनां पर्शुकानामेकैकेन कशेरुपिण्डस्थालकेन सन्धानम्, अन्यासान्तु कशेरुद्वयपिण्डस्थाभ्यां स्थालकार्द्धाभ्याम्। सन्धायिन्यश्चात्र स्नायवस्त्रिविधाः। तद्यथा—

(क) पुरस्त्या त्रिशूलाकारा[2] ऊर्द्धाधरीययोः कशेरुपिण्डयोस्तदन्तरालस्थे तरुणास्थिचक्रे च संसक्ता।

(ख) कोषाकारा[3] पर्शुकामुण्डवेष्टनभूता स्थालकपरिधिमभितः संसक्ता श्लेष्मधरकलासहिता।

(ग) सन्ध्यन्तरीया[4] ह्रस्वरज्जुप्राया पर्शुकामुण्ड एव संयुक्ता।

(२) पर्शुकार्बुदानां बाहुप्रवर्द्धनैः सन्धयस्तु[5] युक्तप्रतराख्याः। तत्र सन्धायिन्यः स्नायवश्चतुर्विधाः। तद्यथा—

(क) पर्शुकाबाहुका अग्रिमा[6]। ताः पर्शुकाग्रीवाणां कशेरुबाहुप्रवर्द्धनैः संयोजन्यः। तन्मध्यतश्च पर्शुकानुगानां सिरा-धमनी-नाड़ीनां प्रसरः।

(ख) पर्शुकाबाहुकाः मध्यमा[7]। ताः पर्शुकाकोणानां कशेरुबाहुप्रवर्द्धनाग्रैः संयोजन्यः।

(ग) पर्शुकाबाहुकाः पश्चिमा[8]। ताः कशेरुबाहुप्रवर्द्धनाग्रतः पर्शुकार्बुद पुरस्तात् संसक्ताः।

(घ) अर्बुदकोषिकाः[9]। ताः पर्शुकार्बुदानां कशेरुबाहुप्रवर्द्धनस्थैः स्थालकैः सन्धानकारिण्यः समन्ताद्वेष्टनभूताः श्लेष्मधरकलासहिताः।

---

१ Costo-vertebral Articulations. २ Anterior Costo-vertebral or Stellate Lig. ३ Capsular Lig. ४ Inter-articular Lig. ५ Costo-Transverse Articulations. ६ Antreior Costo-Transverse Lig. ७ Middle (do). ८ Posterior (do). ९ Capsular.

[ ५३ चित्रम्—पर्शुकापृष्ठसन्धयः । ]




[ + एतच्चिह्नं स्नायुबोधकम् ]

## अथ पर्शुका पूर्वसन्धयः ।

पर्शुकापूर्वसन्धयः उरःपर्शुकासन्धयो वा नाम पर्शुकोपपर्शुकोरःफलकानां सन्धयः । ते चतुर्विधाः, तद्यथा—

( १ ) पर्शुकानामुपपर्शुकाभि सन्धयः,

( २ ) उपपर्शुकानामुरःफलकेनोभयतः,

( ३ ) उपपर्शुकानां परस्परम्,

( ४ ) उरःफलकखण्डानां परस्परञ्चेति,

तत्र—

( १ ) द्वादशसंख्यानां पर्शुकानां तत्संख्याभिरुपपर्शुकाभिः सन्धानानि स्थिरानि, पर्शुकाग्रस्थालकेषु उपपर्शुकामूलानां दृढ़सन्धानात् । तत्रास्थिधराख्य-कलामात्रेण संयोगः ।

( २ ) उपपर्शुकानामुरःफलकेन सन्धयस्तु सप्तसंख्या एकैकतः, प्रथमादि-सप्तानामेव उपपर्शुकानामुरःफलकेन सन्धानात् । ते च युक्तप्रतराः अन्यत्र प्रथमोपपर्शुकासन्धेः, स हि सर्व्वथा निश्चल एव । एवञ्च प्रथमसन्धिवर्ज्जमपरेषु षट्सु दृश्यन्ते तत्संख्यानि श्लेषधरकलापुटकानि ।

१ Articulations of the Cartilages of the Ribs with the Sternum etc.

स्नायवः पुनरेकैकस्मिन् सन्धौ दृश्यन्ते चतस्रः उपपर्शुकोरःसन्धायिन्यः, क्रमात्—अग्रिमा, पश्चिमा, कोषाकारा, सन्ध्यन्तरीया चेति स्वनामव्याख्याताः ।

[ ५४ चित्रम्—पर्शुकोरःसन्धयः ]




[ * उरःफलकान्तराला स्नायुः । ]

(३) उपपर्शुकानां परस्परसन्धयस्तु सम्पद्यते कतिचित्स्नायुसूत्रै रुपपर्शुकान्तरालाख्यैः। ते च दृश्याः पञ्चम्यादिदशम्यन्तासु उपपर्शुकास्वग्रतः। तत्र पञ्चमी संयुज्यते षष्ठ्या स्तोकमात्रेण, षष्ठ्याद्यास्तु दशम्यन्ताः दृढ़सम्बद्धाः परस्परम्, श्लेष्मधरकलासहिताश्च केषुचित् सन्धिस्थानेषु।

एकादशी द्वादशी चेति द्वे पर्शुके अग्रतः उपपर्शुकासंहिते अपि न केनापि सम्बद्धे पुरस्तात्, अतएव तयोः विमुक्ताग्रसंज्ञेति प्रागवोचाम।

(४) उरःफलकान्तरीयसन्धयस्तु ग्रैवेयकमध्यफलकाग्रपत्राख्यानां खण्डानां परस्परसन्धानात् सम्पन्नाः। तत्र स्नायवश्चतस्रः—पुरस्त्या उरःफलकसंयोजनी, पश्चिमा उरःफलकसंयोजनी चेति द्वे पूर्व्वापरे, एका उरःफलकान्तराला ग्रैवेयकमध्यफलकयोरन्तरालस्था तरुणास्थिप्राया, अपरा अग्रपत्रसंयोजनी चेति।

## अथ अक्षकोरःसन्धानम्।

**अक्षकोरःसन्धानन्तु**[१] अक्षकास्थ्नः उरःफलकेन सन्धावमेकैकतः स्नायुकोषप्रतिबद्धं श्लेष्मधरकलासहितञ्च। तद्दृढ़ीकरणाय चात्र स्नायुः प्रथमपर्शुकया तत्संयोजनी, अक्षकयोरन्तरालस्था चापरा परस्परसंयोजनी।

**अक्षकांससन्धानन्तु** अंससन्धिव्याख्याने व्याख्येयम्।

## अथ श्रोणिचक्रसन्धयः।

श्रोणिचक्रसन्धयस्तावद् द्विधा वर्ण्यन्ते—श्रोणिचक्राख्यां पृष्ठवंशेन, परस्परञ्च सन्धानात्। तत्र—

**श्रोणिचक्रस्य पृष्ठवंशेन सन्धिः** दृढ़प्रतराख्यः। स च सम्पद्यते पञ्चम्या कटिकशेरुकया त्रिकास्थ्नः सन्धिमाश्रित्य। तयोः सन्धायिन्यश्च स्नायवः पृष्ठवंशस्नायुवत्, काश्चित् तदनुबन्धिन्यश्च[२]। द्वे द्वे चात्राधिके स्नायू एकैकतः—कटिजघनिका कटित्रिकान्तिका च नाम। तयोः—

---

१ Sterno-clavtcular Articulation. २ यथा हि पृष्ठवंशसन्धिवर्णने वर्णिताः पञ्चजातीयाः स्नायवः तद्वदिहापि। दृढ़त्वात्तु साधारणाख्यानां पृष्ठवंशस्नायूनामनुबन्धिन्य इति विशेषः।

कटिजघनिका[1] चतुर्थ्याः पञ्चम्याश्च कटिकशेरुकायाः बाहुप्रवर्द्धनतो जघन-धारान्तं सङ्गता, कटिनाड़ीप्रवेशाय मध्ये विवरान्विता रज्जुगुच्छरूपा च ।

कटित्रिकान्तिका[2] दृढ़त्रिकोणपट्टिकाप्राया पञ्चम्या कटिकशेरुकया त्रिकास्थ्नः, श्रोणिफलकस्य त्रिकस्थालकपरिधेश्च संयोजनी ।

**श्रोणिचक्रास्थ्नां परस्परसन्धयः** पुनश्चतुर्विधाभिः सम्पद्यन्ते स्नायुभिः— (१) त्रिकास्थ्नो जघनकपालेन, (२) त्रिकास्थ्नः कुकुन्दरास्थ्ना, (३) त्रिका-नुत्रिकयोः, (४) भगास्थ्नोश्च परस्परमिति चतुर्द्धा सन्धानात् । तत्र—

(१) त्रिकजघनयोः सन्धानं[3] दृढ़प्रतराख्यम्, त्रिकमुभयतो जघनकपालयोः सन्धानात् । तत्र हि सन्धीयते त्रिकास्थि जघनकपालस्य त्रिकस्थालकेन तद-ग्रास्थिपत्रकावृतेन, न च तत्र प्रायो दृश्यते श्लेषधरा कला । गर्भिण्यास्तु त्रिकस्थालकयोः सम्भवतः श्लेषधरी कलापुटकी गर्भाभिवृद्ध्या श्रोणिफलकयो-श्चलत्वात् । स्नायवश्चात्र त्रिकजघनसंयोजन्यश्चतस्रस्त्रिकजघनिकाः नाम द्वे द्वे एकैकतः, क्रमात्—अग्रिमा पश्चिमा चेति । ताश्च दृढ़पट्टिकाकाराः ।

(२) त्रिककुकुन्दरास्थिसंयोजन्यश्च[4] स्नायवश्चतस्र एव,—द्वे द्वे एकैकतः क्रमात् लघ्वी गुर्वी च नामेति । ताभ्याञ्च यथादेशसंयुक्ताभ्यां परिच्छिद्यते क्रमात्—गृध्रसीद्वारं कुकुन्दरद्वारञ्च तत्तद्विवराख्यम् । तत्र गृध्रसीविवरेण गृध्रस्याख्यनाड्याः तदनुवर्त्तिनीनां सिराधमन्यादीनां शुण्डिकाख्यपेश्याश्च निर्गमः । कुकुन्दरविवरेण पुनरन्तःस्थायाः श्रोणिगवाक्षिण्याः पेश्याः तदनु-चरीणां सिराधमनीनाड़ीनाञ्च वस्तिगुहायां प्रवेशः । तत्र—

लघ्वी त्रिककुकुन्दरसंयोजनी[5] स्नायुः पुरस्था तन्वी त्रिकोणप्राया च । सेयं त्रिकानुत्रिकयोः पार्श्वधारातः कुकुन्दरकण्टकान्तं सङ्गता ।

गुर्वी त्रिककुकुन्दरसंयोजनी[6] तु स्नायुः पश्चिमस्था स्थूला त्रिकोणप्राया च । सेयं मूलतः सम्बध्यते जघनकपालस्य पश्चिमाधस्तनकूटेन त्रिकास्थ्नोऽधरार्द्धपार्श्वेना-नुत्रिकास्थ्ना च, अग्रतस्तु कुकुन्दरपिण्डेन श्रोणिगवाक्षपुरःपरिधिना च ।

---

१ Ilio-lumbar Lig. २ Lumbo-Sacral Lig. ३ Sacro-iliac Articulation. ४ Sacro-ischiatic Ligaments. ५ Lesser Sacro-Sciatic Ligament. ६ Great Sacro-Sciatic Ligament.

(३) त्रिकानुत्रिकसन्धायिन्य[1] स्नायवश्चतस्रः,—अग्रिमा, पश्चिमा, पार्श्वगे द्वे चेति । सन्ध्यन्तराले चात्र दृश्यं तरुणास्थिचक्रम् ।

[ ५५ चित्रम्—श्रोणिचक्रसन्धयः । ]




श्रो णि फ ल क म्

[ † एतच्चिह्नं स्नायुबोधकम् । १, २, कटिनाड़ीनिर्गमाय विवरद्वयम् । अत्र च वामार्द्धे याः स्नायवो यथा दर्शिताः दक्षिणार्द्धेऽपि तास्तथा ज्ञेयाः ]

अनुत्रिकञ्च क्षुद्रकशेरुकाचतुष्टयसङ्घातमयमित्युक्तपूर्व्वम् । तत्कशेरुखण्डानाञ्चात्र पार्थक्यं दृश्यते नारीषु प्रायः प्रसवकाले श्रोणिद्वारस्य विकासनसौकर्य्यार्थम् ।

(४) भगास्थ्नोः परस्परसन्धानं[2] तावत् स्वमुखाभ्यां मध्यरेखायाम् । संहितयोश्च तयोरेका भगास्थिसंज्ञेति प्राञ्चः, अत्र तु क्वचिद्भगपीठं लिङ्गपीठमिति वा । सन्धानञ्चेदं दृढ़प्रतरमपि गर्भिण्याः किञ्चिद्विकसनक्षममिति परीक्षकाः ।

---

१ Sacro coccygeal Ligaments. २ Symphysis Pubes.

सन्धायिन्यश्चात्र स्नायवश्चतस्र एव भगसंयोजन्यो नाम क्रमात्—उत्तरा, अधरा, अग्रिमा, पश्चिमा चेति। सन्धानान्तराले चात्र तरुणास्थिचक्रम्, सर्व्वथा श्लेषधरकलाभावश्च।

**अंसचक्रसन्धयस्तु** अंससन्धिवर्णने वर्णनीयाः।

## अथ शाखासन्धयः।

शाखाश्चतस्रः—द्वौ बाहू द्वे च सक्थिनी। तत्र प्रतिबाहु सप्तसु देशेषु सन्निविष्टाः सन्धयः। तद्यथा—अंसे च, कूर्परे च, प्रकोष्ठान्तराले च, मणिबन्धे च, करकूर्चान्तश्च, करतले च, कराङ्गुलिषु चेति। प्रतिसक्थि च तथैव क्रमात्—वंक्षणे च, जानुनि च, जङ्घान्तराले च, पादसन्धौ च, पादकूर्चान्तश्च, पादतले च, पादाङ्गुलिषु चेति। तत्रादौ व्याख्येया :—

## ऊर्द्ध्वशाखासन्धयः।

---

## 1 अथ अंससन्धयः।

**अंससन्धयस्तावत्** सम्पद्यन्ते अक्षकांसफलकप्रगण्डाख्यां सन्धानात्। तत्र अक्षकांसयोः सन्धानमंसचक्रसन्धानं नाम, प्रगण्डांसफलकयोः सन्धानन्तु अंसोदूखलसन्धानं कक्षासन्धानं वा नाम। बहवश्चानयोः सन्धानयोः संयोजन्यः स्नायवः, द्वे चापरे अंसकान्तरीये नाम अंसफलकावयवानां परस्परसंयोजन्यौ। तत्र—

**अंसचक्रसन्धानम्**[१] अक्षकास्थिबहिःप्रान्तस्य अंसकूटाग्रेण संयोगात्। सन्धिश्चायं चलप्रतराख्यः, क्वचित् सन्ध्यन्तःस्थितेन तरुणास्थिचक्रेणोपलक्षितश्च। तत्सम्बन्धन्यश्च स्नायवश्चतस्रः—द्वे अंसाक्षकबन्धन्यौ,—उत्तरा अधरा चे[२]ति, द्वे च तुण्डाक्षकबन्धन्यौ,—त्रिकोणिका चतुरस्रिका चे[३]ति। तासामाद्ये अंसचक्रसन्धायिन्यौ क्रमादूर्द्ध्वाधःस्थे, अन्त्ये अंसतुण्डपश्चार्द्धात् अक्षकास्थ्नो बहिःप्रान्तोर्द्ध्वाधस्तलं यावत् सन्नद्धे स्वनामव्याख्याते।

**अंसफलकान्तरीये**[४] तु स्नायू क्रमात् तुण्डमूलिका[५] तुण्डकूटिका[६] च नाम। तत्राद्या अंसतुण्डमूले अंसशिरःकोटरोपरि संलग्ना, अन्त्या अंसतुण्डबाह्यार्द्धात् अंसकूटाग्रं यावत् सन्नद्धा।

---

१ Acromio-Clavicular Articulations. २ Superior and Infeior Acromio-clavicular Ligaments. ३ Coroco-clavicular Ligaments ( Conoid and Trapezoid ). ४ Proper Ligaments of the Scapula. ५ Transverse. ६ Coraco-Acromial.

## [ ५६ चित्रम्—अंससन्धयः ]




[ † एतच्चिह्नं स्नायुबोधकम् ]

अंसोदूखलसन्धानं कक्षासन्धानं[1] वा नाम सम्पद्यते प्रगण्डास्थ्नो मुण्डस्योदूखलाकारे अंसपीठस्थे स्थालके सन्धानात्। स्थालकञ्च तत् तरुणास्थि-भूयिष्ठेन स्नायुचक्रेण[2] निष्पद्यते गभीरम्। अस्थिसम्बन्धिन्यौ चात्र स्नायू द्वे एव—अंसोदूखलिकः स्नायुकोषः, तुण्डप्रगण्डिका चेति। तयोः—

अंसोदूखलिको[3] नाम दीर्घशिथिलः स्नायुकोषः ऊर्द्ध्वमंसोदूखलमभितः, अधः प्रगण्डास्थ्नो ग्रीवां परितश्च सम्बद्धः। तत्र च त्रीणि विवराणि सन्ध्यन्तरीयस्य श्लेष्मधरकलापुटस्य शाखानां तिसृणां कण्डरानुगानां निर्गमाय। कण्डराश्च ताः—अंसान्तरिका[4], अधरा अंसपृष्ठिका[5] चेति पेश्योः प्रान्तभूते द्वे, द्विशिरस्काख्य पेश्या दीर्घशिखा[6] चेति। तासां चरमा सन्ध्यन्तःप्रविष्टा।

---

१ उदूखलाख्यः सन्धिः 'कक्षावंक्षणयोरिति व्याख्यातपूर्व्वम्। अंससन्धिश्च प्रधानतः कक्षासन्धिरेव। ( Shoulder-Joint ). २ Glenoid Ligament. ३ Capsular Ligament of Shoulder. ४ Sub-Scapularis. ५ Infraspinatus. ६ Long Tendon of Biceps.

तुण्डप्रगण्डिका[1] नाम स्नायुरंसतुण्डात् प्रगण्डास्थ्नो महापिण्डकान्तमागता स्नायुकोषैकदेशेन प्रतिबद्धा।

परितश्च कक्षासन्धानं सन्निविष्टा इमाः पेश्यः—ऊर्द्ध्वम् अंसपृष्ठिका उत्तरा। अधस्तात् त्रिशिरस्काया दीर्घशिखा। अन्तःपार्श्वे अंसान्तरिका। बहिःपार्श्वे अंसपृष्ठिका अधरा, अंसाधरिका लघ्वी च। स्नायुकोषाभ्यन्तरे द्विशिरस्काया दीर्घशिखा। समग्रमंससन्धिमंसचक्रञ्च सञ्छाद्य अंसच्छदा।

चेष्टाः पुनरमुं सन्धिमाश्रित्य प्रवर्त्तन्ते नानाविधाः पुरःपश्चादन्तर्बहिःकर्षणाद्याः, विवर्त्तते चात्र प्रगण्डास्थिमुण्डं यथेष्टमिति चेष्टावतां सन्धीनां प्रधानमाचक्षते कक्षासन्धिं सन्धिविदः।

## 2 अथ कूर्परसन्धिः।

कूर्परसन्धिः[2] कफोणिसन्धिर्वा नाम प्रगण्डास्थ्नः प्रकोष्ठास्थिभ्यां सन्धानं सामान्यतः। स च सन्दंशकोराख्यः, अन्तःप्रकोष्ठास्थ्नः सन्दंशाकारस्य कूटद्वयस्यान्तः प्रगण्डास्थ्नो डमरुकाख्यभागस्य सन्धानात्। सन्धीयते च तत्रैव बहिःप्रकोष्ठास्थ्नः कोरमध्यं मुण्डं प्रगण्डास्थ्नः कन्दलीभागेन। बहिःप्रकोष्ठास्थिनो चात्र परस्परसंहिते कूर्परसन्ध्यन्तःप्रविष्टे।

[ ५७ चित्रम्—कूर्परसन्धिः ( आन्तरतलम् ) ]




[ † एतच्चिह्नं स्नायुबोधकम्। ]

१ Coraco-humeral Lig. २ Elbow-joint.

अथेह कूर्परसन्धिबन्धन्यः स्नायवश्चतस्रः—अग्रिमा, पश्चिमा, बहिःपार्श्विका, अन्तःपार्श्विका चेति। प्रकोष्ठास्थ्नूरुर्द्ध्वप्रान्तसम्धायिनी तु स्नायुर्मुण्डवेष्टनिका नाम्नाग्रे वक्ष्यते, तया प्रथमतयस्य सम्बन्धो घनिष्ठः। तत्र—

अग्रिमा कूर्परसन्धिबन्धनी प्रगण्डास्थ्न आन्तरार्बुदात् पुरस्तलाच्च सम्भूय अन्तःप्रकोष्ठास्थ्न ऋजुप्रवर्द्धनपरिधौ सङ्गता मुण्डवेष्टनिकाख्यस्नायुसम्बद्धा च।

पश्चिमा कूर्परसन्धिबन्धनी प्रगण्डास्थ्नः कूर्परखातोपकण्ठादुद्भूय अन्तःप्रकोष्ठास्थ्नः कूर्परकूटपरिधौ संसक्ता।

बहिःपार्श्विका प्रगण्डस्य बाह्यार्बुदात् सम्भूय मुण्डवेष्टनिकाख्यस्नायौ-सम्बद्धा।

अन्तःपार्श्विका प्रगण्डास्थ्न आन्तरार्बुदादन्तःप्रकोष्ठास्थ्नः कूटद्वयान्तःपरिधौ संसक्ता।

सर्व्वासामासां स्नायूनां परस्परसंयुक्तानामेकीभावात् स्नायुकोषवद्भावः अन्यत्र कूर्परकूटपृष्ठात्। तद्धि त्वङ्मात्रावरणमिति प्रागवोचाम।

**चेष्टा**स्तावदिह कूर्परसन्धौ संकोचः, प्रसारः, अन्तर्विवर्त्तनं, बहिर्विवर्त्तनञ्चेति चतुर्व्विधाः; तासां प्रसारस्तावद्बाह्वोर्दण्डीभावमात्रपर्य्यवसायीति विशेषः।[1]

**श्लेष्मधरा** चात्र कला सम्ध्यन्तरीया प्रकोष्ठास्थ्नोरूर्द्ध्वसन्धानान्तःप्रसृतया शाखया सनाथा।

## 3 अथ प्रकोष्ठान्तरीयसन्धयः।[2]

**प्रकोष्ठास्थ्नोः परस्परसन्धानं** तावदल्पचेष्टम् ऊर्द्ध्वाधःप्रान्तयोः कोरं, मध्ये प्रतराख्यञ्च। तद्धि त्रिषु देशेषु दृश्यम्—ऊर्द्ध्वमधोमध्ये चेति। तत्र **ऊर्द्ध्वसन्धाने** सन्धीयते बहिःप्रकोष्ठमुण्डमन्तःप्रकोष्ठास्थ्न ञक्रनेमिखातेन, तत्संवेष्टनी चात्र स्नायुर्मुण्डवेष्टनिका नाम बहिःप्रकोष्ठमुण्डस्य विवर्त्तनप्रदा। अपरा चात्रैवाधस्तात् तिरश्चीना स्नायुः प्रकोष्ठतिरश्चीना नाम। **अधःसन्धाने** तु सन्धीयते अन्तःप्रकोष्ठास्थ्नो मणिमुण्डं बहिःप्रकोष्ठाधःप्रान्तपार्श्वतः। बन्धनञ्चानयोः प्रकोष्ठाधस्त्याख्यपूर्व्वापरस्नायुद्वयेन त्रिकोणतरुणास्थ्ना च] मणिबन्धसन्धिप्रविष्टेन। **मध्यसन्धानं** पुनः प्रकोष्ठास्थ्नोरादूरवर्त्तिनोः प्रकोष्ठान्तरालाख्यया दृढ़कलया, नतत्र तयोः साक्षात् परस्परस्पर्शः।

---

१ प्रसारितो हि बाहुर्दण्डवद्भवति न तु वैपरीत्येनावनम्यते। २ Radio-ulnar Articulations.

# अथ मणिबन्धसन्धिः ।

**मणिबन्धसन्धिः**[१]स्तावत् खल्लकोराख्यः, बहिःप्रकोष्ठास्थ्नोऽधःप्रान्तस्य खल्लकोरभागे अर्द्धचन्द्रनौनिभाख्ययोः कूर्चास्थ्नोः सन्धानात्। अन्तःप्रकोष्ठाधःप्रान्तस्तु नात्र सन्धीयते साक्षात्, तत्संहितत्रिकोणतरुणास्थ्नैव उपलकाख्यकूर्चास्थ्नः सन्धानात्[२]।

## [ ५८ चित्रम्—मणिबन्धसन्धिः ( पुरस्तलम् ) ]




[ + एतच्चिह्नं स्नायुबोधकम् ]

---

१ Wrist-Joint. २ एवञ्च अर्द्धचन्द्रनौनिभोपलकाख्यस्य कूर्चास्थित्रयस्य मणिबन्धसन्धौ प्रवेशः। प्रकोष्ठास्थ्नोस्तु वाह्यमेव तत्सन्धिनिर्माणकम्।

मणिबन्धबन्धन्यस्त्विह स्नायवश्चतस्रः—बहिःपार्श्विका, अन्तःपार्श्विका, अग्रिमा, पश्चिमा चेति। तत्र—

बहिःपार्श्विका बहिःप्रकोष्ठास्थ्नो बहिर्मणिकाख्यप्रवर्द्धनात् नौनिभपर्य्याणकाख्ययोः कूर्चास्थ्नोः कङ्कणिकाख्यस्नायोश्च पार्श्वान्तं सङ्गता।

अन्तःपार्श्विका रज्ज्वाकारा अन्तःप्रकोष्ठास्थ्नः अन्तर्मणिकाख्यप्रवर्द्धनात् सम्भूय उपलकवर्त्तुलकाख्ययोः कूर्चास्थ्नोः कङ्कणिकाख्यस्नायोश्च पार्श्वान्तं सङ्गता।

अग्रिमा तु प्रततपट्टिकाकारा प्रकोष्ठास्थ्नोरधःप्रान्तयोः पुरस्तलात् सम्भूय नौनिभार्द्धचन्द्रोपलकाख्यानां कूर्चास्थ्नां पुरस्तले सन्नद्धा।

पश्चिमा च तादृश्येव। सा केवलं बहिःप्रकोष्ठाधःप्रान्तस्य पश्चिमतलात् सम्भूय पूर्व्वोक्तकूर्चास्थित्रयपृष्ठतः सन्नद्धा।

श्लेष्मधरा कला तावत् मणिबन्धसन्धौ विशेषतः शिथिला पुष्कलश्लेष्मवती च, मणिबन्धसन्धेः शैथिल्यात्।

चेष्टाश्चात्र सन्धौ प्रवर्त्तन्ते नानाविधाः पुरःपश्चादन्तर्बहिश्च विवर्त्तनरूपाः। सन्धेश्चास्य शैथिल्यं स्थितिस्थापकता च भारधारणसौकर्य्याय।

## 5 अथ करकूर्चान्तरीयसन्धयः।

करकूर्चास्थीन्यष्टौ श्रेणीद्वयविन्यस्तानि,—एकैकस्यां श्रेण्यां चत्वारि चत्वारीति। तत्रोर्द्ध्वश्रेणीस्थानां चतुर्णां मध्ये नौनिभार्द्धचन्द्रोपलकाख्यानि त्रीणि मणिबन्धसन्धौ प्रविष्टानि, वर्त्तुलकाख्यन्तु बहिःसन्धितः, तद्धि कण्डरान्तरीयं चणकास्थीति केचिदित्युक्तपूर्व्वम्।

अथैषां कूर्चास्थ्नां परस्परसन्धानं तावत् प्रतराख्यम्, त्रेधा व्याख्येयञ्च—ऊर्द्ध्वश्रेणीस्थानां परस्परम्, अधःश्रेणीस्थानां परस्परम्, ऊर्द्ध्वाधःश्रेण्योश्च परस्परमिति। तत्र—

ऊर्द्ध्वश्रेण्यां नौनिभार्द्धचन्द्रोपलकानां परस्परसम्बन्धन्यः स्नायवश्चतस्रः—

---

१ Annular Ligament of the Wrist. सेयं कण्डराधारिणी स्नायुः पेशीखण्डे वर्णनीया।

२ Carpal Articulations.

पुरोगा, पृष्ठगा, कूर्चान्तरीये द्वे चेति। वर्त्तुलकस्य तु बन्धनाय पृथगेव स्नायु-कोषः, द्वे च तत्पुरोगे स्नायू अङ्गुष्ठक-कनिष्ठमूलशलाकयोर्मूलतः संसक्ते ।

**अधःश्रेणीस्थं** पुनः कूर्चास्थिचतुष्टयं पञ्चभिः स्नायुभिः परस्परसम्बद्धम्—द्वाभ्यां पूर्व्वापराभ्यां, तिसृभिश्च कूर्चान्तरीयाभिरिति ।

**ऊर्द्ध्वाधःश्रेण्योश्च** परस्परसन्धायिन्यश्चतस्रः स्नायवः—अग्रिमा, पश्चिमा, अन्तःपार्श्विका, बहिःपार्श्विका चेति ।

सर्व्वासाञ्चासां परस्परानुप्रवेशात् स्नायुजालगवाचितः संहतस्वरूप इव च दृश्यते कूर्चास्थिसमुदायः । तथाच प्रतिकरमेकैकं कूर्चास्थीति केचित् ।

## अथ करतलसन्धयः ।

**करतलसन्धयस्तावत्** प्रधानतः करतलनिर्म्मापिकाणां मूलशलाकानां सन्धयः कोराख्याः । सन्धानञ्च तासां त्रेधा द्रष्टव्यम्—ऊर्द्ध्वं पर्य्याणक-कूटक-मध्यकूट-फणधर-संज्ञैश्चतुर्भिः कूर्चास्थिभिः[1], अधस्तात् अङ्गुलीपश्चिमनलकैः[2], मूलतः परस्परञ्चेति[3] । तत्सन्धानप्रकारास्तु अस्थिखण्डे वर्णितपूर्व्वाः ।

अथेमाः करतले सन्धिबन्धन्यः स्नायवः—

एका पर्य्याणकाङ्गुष्ठमूलशलाकयोर्मूलतः पृथक् श्लेष्मधरकलावती—कोषरूपा (सन्धिश्चायं परस्परकोर इति वर्णितपूर्व्वम्) । अन्याः अपरासां मूलशलाकानां तत्तत्कूर्चास्थिभिर्बन्धनाय—षट् पृष्ठगाः, अष्टौ पुरोगाः, द्वे च सन्ध्यन्तरीये—इति षोड़श[4] स्नायवः ।

एकैव चात्र श्लेष्मधरा कला कनिष्ठादिमूलशलाकाचतुष्टयस्य मूलतः कूर्चास्थ्नामन्तरालेषु च परिव्याप्ता अन्यत्र वर्त्तुलकसन्धेः । तत्र तु पृथगेव श्लेष्मधरकलापुटकम् ।

अङ्गुलिपश्चिमनलकानां सन्धयस्तु अङ्गुलिसन्धिवत् ।

मूलशलाकानां परस्परसन्धयः पुनरङ्गुष्ठवर्ज्जमपरासामेव मूलतः[5] । तत्र त्रिविधाः

१ Carpo-Metacarpal Articulations. २ Metacarpo-phalangeal Articulations. ३ Inter-Metacarpal Articulations. ४ विस्तरस्त्वासां मृतके द्रष्टव्यः । ५ सन्धिप्रकारस्मरणार्थं श्लोकाः १२८ पृष्ठान्ते द्रष्टव्याः ।

सन्धायिन्यः स्नायवः—पूर्व्वगाश्च पृष्ठगाश्च शलाकान्तरीयाश्चेति। अग्रतस्तु मूलशलाकानामन्तरालस्थाः दृढ़स्नायवः शलाकान्तरीया नाम। शलाकानां परस्परस्पर्शाभावेऽपि हि ताभिः परस्परसम्बद्धानि दृश्यन्ते मूलशलाकाग्राणि।

## 7 अथ कराङ्गुलिसन्धयः।

कराङ्गुलिसन्धयस्तु अङ्गुलिनलकानां चतुर्दशानां चतुर्दश—एकैकस्यामङ्गुल्यां त्रयस्त्रयो द्वावङ्गुष्ठे चेति। ते च कोराख्याः[3]।

एकैकस्मिंश्चाङ्गुलिसन्धौ स्नायवस्त्रिस्र एव—पुरोगा, अन्तःपार्श्विका, बहिःपार्श्विका चेति। पृष्ठगा च स्नायुरत्र पृथग् न दृश्यते, प्रसारणाख्यपेशीनां कण्डराभिरेव तत्प्रयोजनसाधनात्।

**चेष्टाः** पुनः कराङ्गुलीनां सङ्कोचप्रसारान्तःकर्षणबहिःकर्षणरूपाः, जपनञ्चाङ्गुष्ठस्य।

## अथ अधःशाखासन्धयः।

अधःशाखासन्धयस्तावत् प्रायेणोर्द्ध्वशाखासन्धिवदेव, विशेषास्तु तत्रावस्थानभेदकृताः। तत्रादौ—

### 1 वंक्षणसन्धिः[4]।

**वंक्षणसन्धिर्वंक्षणोदूखलसन्धिर्वा** नाम श्रोणिफलकस्थस्य वंक्षणोदूखलस्य तरुणास्थिवलयवेष्टितस्य ऊर्व्वस्थिमुण्डेन सन्धानमुदूखलाख्यम्। तत्र च महती श्लेषधरा कला महास्नायुकोषान्तर्व्यापिनी। सन्धिबन्धनश्चात्र एक एव महान् स्नायुकोषः प्रधानभूतः—स च वंक्षणोदूखलपरिधेः सम्भूय ऊर्व्वस्थिग्रीवामभितः शिखरान्तरालाख्यरयोश्च रेखयोः सम्बद्धः। स्नायुकोषश्चायं तिसृभिर्दृढ़स्नायुरज्जुभिः श्रोणिफलकावयवभूतादस्थित्रितयात् समुद्गताभिर्दृढ़ीकृतः—इत्यत्र विशेषः।

---

१ Phalangeal Articulations. २ जपनं जपकर्म्मणि व्यापृतस्याङ्गुष्ठस्य चेष्टाविशेषः, स च कराङ्गुष्ठस्यैव सम्भवति ३ Knuckle = bone at finger joint. ४ groin

## [ ५६ चित्रम् — वङ्क्षणसन्धिः । ]

( स्नायुकोषच्छेदेन दर्शितः )




( * एक एव स्नायुकोषोऽयं वङ्क्षणसन्धिच्छादनः )

स्नायुकोषान्तस्थात विशेषतो द्रष्टव्या वंक्षणसन्ध्यन्तरीया[1] नाम दृढ़ा स्नायुरज्जुः—सा वंक्षणोदूखलमध्यस्थादगभीरकोटरादुद्गम्य ऊर्व्वस्थिमुण्डस्थे गर्त्ते सम्बद्धा सन्धिदार्ढ्यकरी ।

2

## अथ जानुसन्धिः ।

जानुसन्धिर्[2] नाम ऊरु-जानु-जङ्घास्थ्नां सन्धिर्बहुधासम्बद्धोऽपि चेष्टावान् । तत्र जानुकपालस्य ऊरुजङ्घास्थिभ्यां सन्धिः प्रतराख्यः, ऊरुजङ्घास्थ्नोः सन्धिः पुनः कोराख्यः । अनुजङ्घास्थ्नस्तु जानुसन्धौ न प्रवेशः ।

१ Ligamentum Teres. २ Knee-Joint.

## [ ६० चित्रम्—जानुसन्धिः । ]

( सन्धिरयमूर्द्ध्वाधरच्छेदेन दर्शितः )

ऊर्व्वस्थि




[ † एतच्चिह्नं स्नायुबोधकम् ]

तत्र ऊरुजानुजङ्घास्थ्नां त्रयाणामपि संवेष्टनः प्रतनुरपि दृढ़प्रायः स्नायुकोषः एक एव । तद्दृढ़ीकरणार्थं चतस्रः स्नायवः सन्धिवाह्याः । तद्यथा—

(१) पुरोगा—जानुकपालबन्धनी[1] नाम, सेयं जानुकपालपरिधेः सम्भूता। तस्या अधरार्द्धं जङ्घास्थ्नः ऊर्द्ध्वप्रान्तपुरस्तलस्थेऽर्ब्बुदे सम्बद्धम्, उत्तरार्द्धं पुनरूर्द्ध्वगतया ऊरुप्रसारण्याख्यपेशीचतुष्टयस्य सम्मिलितकण्डरयाऽऽभिन्नं स्नायुकोषगात्रप्रतिबद्धम्।

(२) पश्चिमगा—जानुपृष्ठिका नाम ऊर्व्वस्थ्नो महार्ब्बुदद्वयस्य पृष्ठतः जङ्घास्थ्न ऊर्द्ध्वप्रान्तपृष्ठान्तं सन्नद्धा कलाकल्पाख्यपेश्याः कण्डरान्तेन दृढ़सम्बद्धा।

(३) अन्तःपार्श्विका नाम—ऊर्व्वस्थ्न आन्तरमहार्ब्बुदपार्श्वात् जङ्घास्थ्न आन्तरोत्सेधपार्श्वान्तं सन्नद्धा।

(४) बहिःपार्श्विका—नाम स्नायुरूर्व्वस्थ्नो बाह्यमहार्ब्बुदपार्श्वादनुजङ्घास्थ्न ऊर्द्ध्वप्रान्ते संसक्ता। सा युग्मा—दीर्घा ह्रस्वा चेति।

अपरास्तत्र दृश्यन्ते जानुसन्ध्यन्तः स्नायवः पञ्च, द्वे च तरुणास्थिनी अर्द्धचन्द्राकारे[2] योजकरज्जुसम्बद्धे। तत्र तरुणास्थिनी जङ्घास्थिशिरःस्थितेन द्विमुखेन कण्टकेन सम्बद्धप्रान्ते। स्नायुपञ्चकन्तु यथा—

## [ ६१ चित्रम्—जानुसन्धेरभ्यन्तरं पूर्व्वापरच्छेदेन दर्शितम्। ]




१ Ligamentum Patellae. २ Semilunar Cartilages.

द्वे जानुस्वस्तिकाख्ये[1]—अग्रिमा पश्चिमा चेति ; ते जङ्घास्थिशीर्षस्थद्विमुख-कण्टकोपकण्ठात् समुत्थाय क्रमाद् ऊर्व्वस्थिवाह्यान्तःकन्दयोः सम्बद्धे ।

तिस्रः श्लेष्मधरकलाबन्धन्यश्च—एका त्रिकोणाकारा पुरोगा, द्वे पञ्चतिप्राये पृष्ठतः अर्द्धचन्द्राकारतरुणास्थिप्रान्तेषु संसक्ते ।

**श्लेष्मधरा कला** तु जानुसन्धौ द्विविधा—एका सन्ध्यन्तरीया महोर्द्ध-शाखावती विशाला च उक्तस्नायुत्रयनिबद्धा, द्वे च सन्धिवाह्ये कलापुटके इति । तत्र सन्धिवाह्यमेकं कलापुटकं त्वग्जानुकपालयोरन्तरालस्थं त्वाचम्, अपरं जानुकपालबन्धन्याः स्नायुरज्ज्वाः पश्चिमस्थं कण्डरानुगमिति । सन्ध्यन्तश्चात्र पुरस्तात् पृष्ठतश्च श्लेष्मधरकलाच्छन्नं मेदःपिण्डद्वयं द्रष्टव्यम् ।

**चेष्टा** तु जानुसन्धौ द्विविधैव, सङ्कोचः प्रसारश्चेति । तत्र सङ्कोचः पुष्कलः, प्रसारस्तु दण्डीभावान्त इति विशेषः ।

## 3 अथ जङ्घान्तरीयसन्धयः ।

**जङ्घानुजङ्घास्थ्नोः परस्परसन्धानं** तावत् त्रिषु प्रदेशेषु—ऊर्द्ध-मधो मध्ये[2] चेति । तत्र **ऊर्द्ध्वसन्धाने** सन्धीयते अनुजङ्घास्थ्न ऊर्द्धप्रान्तः जङ्घास्थ्न ऊर्द्धप्रान्तस्थेन वाह्योत्सेधेन पश्चिमतः । सन्धिश्चायं प्रतराख्यः सर्व्वथा जानुसन्धिबहिर्भूतश्च—तदेतदस्य वैसादृश्यं कूर्परसन्धानात् । तथाप्यत्र स्नायुद्वयं दीर्घं ह्रस्वञ्च जानुसन्धेर्बहिःपार्श्विकाख्यम् ऊर्व्वस्थिसंसक्तं तत्सन्धिदार्ढ्यायेति विशेषः । तत्सन्धायिन्यश्चापराः स्नायवस्तिस्रः—अग्रिमा पश्चिमा कोषाकारा चेति । **अधःसन्धानं** तावत् कोराख्य—तद्धि जङ्घास्थ्नः अधःप्रान्तबहिःसीमस्थे कोरत्रिकोणप्रदेशे सन्धीयते अनुजङ्घास्थ्नोऽधःप्रान्तो बहिर्गुल्फनिष्पादकः ; तत्र च सन्धायिन्यः स्नायवश्चतस्रः—अग्रिमा, पश्चिमा, वलयिका, सन्ध्यन्तरीया चेति । एवंसंहिताभ्याञ्च जङ्घानुजङ्घास्थिभ्यां सन्धीयते कूर्चशिरः—सोऽयं गुल्फसन्धिः पादसन्धिर्वा अनुपदं व्याखेयः । जङ्घानुजङ्घास्थ्नोरधःसन्धिबन्धन्यः स्नायवश्च तिस्र एव । अग्रिमा पश्चिमा सन्ध्यन्तरीया चेति—स्वनामव्याख्याता । **मध्यसन्धानन्तु** जङ्घानुजङ्घास्थ्नोर्दृढकलयैव ।

---

१ Crucial Ligaments. २ Superior, Inferior and Middle Tibio-fibular Articulations.

[ ६२ चित्रम्—जङ्घास्थिनी ]




## अथ गुल्फसन्धिः ।

गुल्फसन्धिः पादसन्धिर्वा नाम जङ्घास्थ्नोरधःप्रान्तयोः कूर्चशिरसा सन्धिः खल्लकोराख्यः। तत्र हि जङ्घास्थिद्वयाधःप्रान्तस्थं खल्लवत्कोरं स्थालकमाश्रित्य विवर्त्तते समग्रः पादः पुरःपश्चादन्तर्बहिश्च कूर्चशिरोव्यवधानेन। अत एवास्य पादसन्धिरित्यपि संज्ञा ।

---

१ Ankle-Joint.

गुल्फसन्धिसम्बन्धन्यः स्नायवस्तु चतस्रः, तद्यथा—

अग्रिमा—जङ्घाधःप्रान्तस्य कूर्चशिरसश्च पुरःपरिध्योः सम्बद्धा।

पश्चिमा—प्रतनुगुच्छमयो तयोरेव पश्चिमपरिध्योः सम्बद्धा।

अन्तःपार्श्विका गुल्फत्रिकोणिका वा नाम। सेयं जङ्घाधःप्रान्तीयादन्तर्गुल्फाख्यभागात् सम्भूय नौनिभकूर्चशिरःपार्ष्णिसंज्ञस्य कूर्चास्थित्रयस्य अन्तःसीम्नि सन्नद्धा।

बहिःपार्श्विका—अनुजङ्घाधःप्रान्ताद् बहिर्गुल्फाख्यात् सम्भय कूर्चशिरःपार्ष्णिसंज्ञस्य कूर्चास्थिद्वयस्य बहिःसीम्नि सन्नद्धा।

## 5 अथ पादकूर्चान्तरीयसन्धयः[1]।

पादकूर्चास्थ्नां सन्धानप्रकारास्तावद् वर्णितपूर्व्वाः। तत्सन्धायिन्यः स्नायवः पुनर्बह्वः, तासां परस्परानुप्रवेशात् स्नायुजालगवाचितो दृढसन्धानादेकीभूत इव च दृश्यते पादकूर्चास्थिसमुदायः करकूर्चास्थिसङ्घवत्। तथाच प्रतिपादमेकैकं कूर्चास्थिसङ्घं शलाकाधिष्ठानमाहुरेके।

तासाञ्च स्नायूनां मध्ये इमास्तावद् विशेषतो लक्षणीयाः—

(१) पार्ष्णिकूर्चशिरसोः सन्धायिन्यस्तिस्रः—अन्तःपार्श्विका, बहिःपार्श्विका, पश्चिमा चेति।

(२) घनपार्ष्ण्योः सम्बन्धन्यश्चतस्रः—द्वे पादतलिके—दीर्घा ह्रस्वा चेति, द्वे च पादपृष्ठिके इति। तत्र दीर्घा पादतलिका संसज्यते दीर्घायाः पादविवर्त्तन्याख्यपेश्याः कण्डरान्तेन।

(३) नौनिभपार्ष्ण्योः सन्धायिन्यौ द्वे—उत्तरा अधरा चेति।

---

१ Tarsal Articulations.

## [ ६३ चित्रम्—पादतलस्थाः स्नायवः । ]




[ + एतच्चिह्नं स्नायुबोधकम् ]

[ १ कूर्चशिरसोऽधस्तलस्था सीता दीर्घाङ्गुष्ठसङ्कोचन्याख्यपेश्याः कण्डरान्तधारणाय । २, २, दीर्घायाः पादविवर्त्तन्याख्यपेश्याः कण्डरान्तः । ]

( ४ ) नौनिभकूर्चशिरसोः सम्बन्धन्यस्तिस्रः—पादतलगा, पादपृष्ठगा, सन्ध्यन्तरीया चेति ।

( ५ ) कोणकाख्यानां त्रयाणां परस्परसम्बन्धन्यश्च तिस्रस्तथैव ।

( ६ ) घनबहिःकोणकयोः सन्धायिन्यश्च तिस्रस्तथैवेति ।

## 6 अथ पादतलसन्धयः[1]।

पादतलस्य तावत् पश्चार्द्धमाश्रित्य स्थिताः सन्धयः कूर्चान्तरीयसन्धिवर्णनेन वर्णितपूर्व्वाः। तत्पूर्व्वार्द्धसन्धयस्तु पादमूलशलाकासन्धयः कोराख्याः। सन्धानञ्च तासां त्रेधा द्रष्टव्यम्—पुरस्तात् पादाङ्गुलिपश्चिमनलकैः पश्चात् कोणकत्रयेण घनाख्येन च कूर्चास्थ्ना, मूलपार्श्वतः परस्परञ्चेति। तत्सन्धानप्रकारा वर्णितपूर्व्वाः।

तत्र पुरस्तात् पादाङ्गुलिपश्चिमनलकैः सन्धयस्तु अङ्गुलिसन्धिवत्, पश्चात् कूर्चास्थिभिः सन्धयस्तु त्रिविधाभिः स्नायुभिः प्रतिबद्धाः—पादतलगाभिश्च पादपृष्ठगाभिश्च सन्ध्यन्तरीयाभिश्चेति।

मूलशलाकानां परस्परसन्धयः अङ्गुष्ठवर्ज्जमपरासामिव मूलतः। तत्रापि त्रिविधाः स्नायवः पूर्व्ववत्, अग्रतस्तु मूलशलाकानामन्तरालस्थाः दृढ़स्नायवः शलाकान्तरीया नाम। तत्र च शलाकानां परस्परस्पर्शाभावेऽपि ताभिः परस्परसम्बद्धानि दृश्यन्ते मूलशलाकाग्राणि।

## 7 अथ पादाङ्गुलिसन्धयः।

**पादाङ्गुलिसन्धयश्च**[2] कराङ्गुलिसन्धिवत् पादाङ्गुलिनलकानां चतुर्द्दशानां चतुर्द्दश,—एकैकस्यामङ्गुल्यां त्रयस्त्रयो द्वावङ्गुष्ठे चेति। ते च कोराख्याः।

स्नायवश्च तत्र कराङ्गुलिसन्धिवत्।

**चेष्टास्तु** पादाङ्गुलिषु स्वल्पतराः सङ्कोचप्रसारन्तःकर्षणबहिःकर्षणरूपाश्चतस्रः। पादाङ्गुष्ठस्य पुनः कराङ्गुष्ठवत् नास्ति जपादिसामर्थ्यमिति विशेषः।

तदेतत् सन्धिस्नायुखण्डं समाप्तम्।

---

१ Metatarsal Articulations. २ Phalangeal Articulations.

इति

श्रीमन्नारायणकरुणावतारश्रीकृष्णचैतन्यतनयोकृत-

धन्यजनिश्रीमद्रघुनन्दनगोस्वामिवंशावतंसस्य

निखिलराढाभूमिसौरभप्रभवश्रीखण्डपुरादिवास्तव्यस्य

विद्याकल्पद्रुमेत्यन्वर्थनाम-सर्व्वतन्त्रस्वतन्त्र-

श्रीविश्वनाथोपमविश्वनाथकविराजात्मजस्य

महामहोपाध्यायगणनाथसेन-कविराजस्य

कृतौ प्रत्यक्षशारीरे

अस्थिसन्धिस्नायुवर्णनीयो नाम

प्रथमो भागः

समाप्तः ।

॥ श्रीकृष्णचरणार्पणमस्तु ॥

# शुद्धिपत्रम् ।

## [ उपोद्घातस्य ]

| (पृष्ठे) | (पङ्क्तौ) | (अशुद्धम्) | (शुद्धम्) |
|---|---|---|---|
| २ | २२ | कोमारभृत्यकाश्च | कौमारभृत्यकाश्च |
| ३ | ८ | परमपुरुषार्थतां | परमपुरुषार्थमूलतां |
| ९ | १० | परशरीराविश | परशरीराविश: |
| १४ | पादटीकायां २ | कल्पला | कल्पना |
| २० | ,, ३ | ( ) पचम् | ४र्थ पदम् |
| २४ | ८ | स्त्रिया | स्त्रिया |
| २८ | १५ | पृथगेवं | पृथगेव |
| ३३ | १५ | ग्रहादिचिकित्सायाञ्च | ग्रहादिचिकित्सायाश्च |
| ३५ | १३ | अस्माभिर्लब्धपरिचया | अस्माभिर्लब्धपरिचया: |
| ३८ | १३।१४ | नागार्ज्जन | नागार्ज्जुन |
| ३८ | पादटीकायां १ | एतद्ग्रन्तांशश्च | एतद्ग्रन्थांशश्च |
| ३९ | ५ | नागार्ज्जन | नागार्ज्जुन |
| ३९ | १५ | प्रहर्षजननार्थ” | प्रहर्षजननार्थं” |
| ४० | २७ | ग्रन्यास्तु | ग्रन्थस्तु |
| ४१ | ,, | विलुप्तप्राया | विलुप्तप्राय |
| ४१ | पादटीकायां ६ | मुद्रितं | मुद्रित: |
| ५१ | पादटीकायां ४ | मूतानां | भूतानां |
| ५२ | १ | माध्यमिकावार्य्य | माध्यमिकाचार्य्य |
| ५२ | ६ | परिव्राजककृत: | परिव्राजकेन कृत: |
| ६१ | ६ | दाक्षिणात्ये | दक्षिणापथे |
| ६१ | पादटीकायां | अवच्छेदसहकृत | अवच्छेदसहकृत |
| ६२ | ,, | स्वरूपानुगतं | स्वरूपानुगतं |
| ६४ | १४ | विसादीनां | विसादीनां |
| ६५ | १२ | मूववड़े | मूववड़े |

| (पृष्ठे) | (पङ्क्तौ) | (अशुद्धम्) | (शुद्धम्) |
|---|---|---|---|
| ६७ | २५ | जलाव्वा | अलाव्वा |
| ६८ | २ | प्रयुज्यते | प्रयुञ्जते |
| ७१ | पादटीकायां | अर्थासङ्गते | अर्थासङ्गतेः |
| ७५ | ७ | प्रासङ्गतरसंज्ञाभ्यः | प्रसिद्धतरसंज्ञाभ्यः |
| ७५ | १८ | अधोयेरन् | अधीयीरन् |
| ७७ | ३।४ | प्रदत्तानि च | प्रदत्ताश्च |
| ७७ | ११ | पूव | पूर्वं |
| ७७ | १३ | निरङ्कश | निरङ्कुश |

## [मूलग्रन्थस्य]

| | | | |
|---|---|---|---|
| ३ | १५ | शारीं | शारीरं |
| ४ | ८ | पञ्चरस्थं | पञ्जरस्थं |
| ५ | पादटीकायां २ | उपादानवज् | उपादानवत् |
| ६ | ,, १ | षड्क्ति | षड्ति |
| ७ | ,, ५ | स्नायुनिर्मितत्वान् | स्नायुनिर्मितत्वात् |
| ८ | ,, ३ | मलिनीभूत | मलिनीभूतं |
| १० | ,, ४ | ईषद्गर्भाः | ईषदगर्भाः |
| ११ | ७ | मूत्रस्रोतोभ्या | मूत्रस्रोतोभ्यां |
| १४ | १८ | निर्हिंशयामः | निर्दिशामः |
| १४ | १८ | मध्यनलकाद् | मध्यनलकेभ्यो |
| १५ | पादटीकायां ५ | तौषिति | तौषौति |
| १६ | २५ | तरुणास्थां | तरुणास्थ्नां |
| १८ | पादटीकायां | * एतच्चिह्न | *[ ] एतच्चिह्न |
| २१ | १ | घमं | घनं |
| २२ | चित्राधः २ | पटिका | पट्टिका |
| २३ | ११ | पश्चिमाः | पश्चिमा |
| २३ | २३ | संयोमाय | संयोगाय |
| २६ | ३ | अधोभूलतः | अधोमूलतः |
| २६ | ५ | श्रोणिपच्चिणी | कोष्ठभूमिका |
| ३१ | चित्रव्याख्यायां ५ | डमरु | डमरु |

| (पृष्ठे) | (पङ्क्तौ) | (अशुद्धम्) | (शुद्धम्) |
|---|---|---|---|
| ३१ | चित्रव्याख्यायां ६ | करोत्तानिनी | करोत्तामनी |
| ३३ | १८ | करप्रसारणीं | करप्रसारणी |
| ३९ | चित्राध: २ | चोष्टद्वयम् | ओष्ठद्वयम् |
| „ | „ ४ | द्दवाधस्तनम् | तदेवाधस्तनम् |
| ४० | ८ | पृष्ठकण्टकश्च | पृष्ठकण्टकञ्च |
| ४० | २० | संयुज्यते | संयुज्येते |
| ४९ | २१ | स्नायू: | स्नायु |
| ६२ | १० | पश्चिमाव्वुँदं | पश्चिमाव्वुदं |
| ६५ | २५ | -लार्ड्वयो | -लार्ड्वयो |
| ६८ | २ | अच्चिगालक | अच्चिगोलक |
| ६८ | ७ | कण्ठकं | कण्टकं |
| ७१ | १७ | एककस्मिन् | एकैकस्मिन् |
| ७५ | ९ | लालूत्तंसनी | तालूत्तंसनी |
| ७६ | १७ | व्याख्यानानि | व्याख्यातानि |
| ८० | १ | नासाकूटं | नासाकूटं |
| ८० | १५ | दन्तोदृखलं | दन्तोदूखलं |
| ८० | २२ | हन्वस्थि | हन्वस्थि |
| ८१ | ४ | अश्रुपोट | अश्रुपोठ |
| ८१ | चित्रोर्द्ध्वत: | सर्व्वेयांश | सर्व्वेयांश: |
| ८३ | २ | ताम | नाम |
| ८३ | ९ | अपाङ्गप्रवर्द्धनं | अपाङ्गप्रवर्द्धनं |
| ८३ | पादटीकायां २ | Tempro | Temporo |
| ८४ | १ | ताल्वस्थिनी | ताल्वस्थिनो |
| ८७ | १० | सम्पादकम | सम्पादकम् |
| ८९ | ६ | नन्मूलतश्च | तन्मूलतश्च |
| ८९ | १७ | प्राञ्च[१४] | प्राञ्च[१४]: |
| ९० | २३ | -मश्वखुराकार | -मर्द्धचन्द्राकार |
| ९५ | २० | दीर्घिकाख्या-: | दीर्घिकाख्य- |
| ९७ | चित्रे २ | पुर:कपाल: | पुर:कपालम् |

| (पृष्ठे) | (पङ्क्तौ) | (अशुद्धम्) | (शुद्धम्) |
|---|---|---|---|
| ९८ | १७ | पञ्चमाख्यनाद्या | पञ्चमाख्यनाड्या |
| १०० | १८ | चर्व्वनक | चर्व्वणक |
| १०१ | ६ | नाड्यो | नाड्योः |
| १०१ | १५ | तत्त | तस्य |
| ११४ | १७ | पुरकुम्भौ | पुरःकुम्भौ |
| ११६ | पादटीकायां १ | पाठ | पाठः |
| ११८ | ५ | पृथग | पृथग् |
| १२० | ८ | मधोहतोः | मधोहनोः |
| १२१ | २६ | स्थितया | स्थितयोः |
| १२२ | चित्रदक्षिणतः | ष्ठवंशपुरस्या | पृष्ठवंशपुरस्ता |
| १२३ | पादटीकायां २ | मृत्युरिरि | मृत्युरिति |
| १२४ | १० | ग्रोधाधराख्या | ग्रीवाधराख्या |
| २२४ | १५ | निम्मीयते | निर्म्मीयते |
| १२७ | १० | स्थिरानि | स्थिराणि |
| १२८ | १३ | सन्धावमेकैकतः | सन्धानमेकैकतः |
| १३१ | चित्रटीकायां | कटिनादी | कटिनाड़ी |
| १३२ | १६ | संयोजन्यौः | संयोजन्यौ |
| १३३ | १ | कन्नासन्धानं | कचासन्धानं |
| १३५ | २१ | संवेष्टनो | संवेष्टनौ |
| १३५ | २६ | प्रकोष्टान्तराला | प्रकोष्ठान्तराला |
| १३६ | ४ | सन्योयते | सन्धीयते |
| १३८ | ८ | कूर्चास्थीति | शलाकाधिष्ठानमिति |
| १४१ | चित्रवामतः ६ | जानुपृष्टिका | जानुपृष्ठिका |

[ मुद्रणदोषादक्षरभङ्गकृता मात्राशुद्धयो वकार-बकार विपर्य्ययाश्च सुधीभिः क्षन्तव्याः ]

---

